प्रच्छर्दयेद्विशेषेण यावत्पित्तस्य दर्शनम् ।
फलपिप्पलिचूर्णं वा क्काथेन स्वेन भावितम् ॥ १० ॥
त्रिभागत्रिफलाचूर्णं कोविदारादिवारिणा ।
पिबेज्ज्वरारुचिष्वेवं ग्रंथ्यपच्यर्बुदोदरी ॥ ११ ॥
पित्ते कफस्थानगते जीमूतादिजलेन तत् ।
हृद्दाहेऽधोस्रपित्ते च क्षीरं तत्पिप्पलीश्टतम् ॥ १२ ॥
क्षैरेयीं वा

कफच्छर्दिप्रसेकतमकेषु तु ।

दध्युत्तरं वा दधि वा तच्छृतक्षीरसंभवम् ॥ १३ ॥
फलादिक्काथकल्काभ्यां सिद्धं तत्सिद्धदुग्धजम् ।
सर्पिः कफाभिभूतेऽग्नौ शुष्यद्देहे च वामनम् ॥ १४ ॥
स्वरसं फलमज्ज्ञो वा भल्लातकविधिश्टतम् ।
आदर्वीलेपनात्सिद्धं लीढ्वा प्रच्छर्दयेत्सुखम् ॥ १५ ॥
तं लेहं भक्ष्यभोज्येषु तत्कषायांश्च योजयेत् ।
वत्सकादिप्रतीवापः कषायः फलमज्जजः ॥ १६ ॥
निंबार्कान्यतरक्काथसमायुक्तो नियच्छति ।
बद्धमूलानपि व्याधीन्सर्वान्संतर्पणोद्भवान् ॥ १७ ॥
राठपुष्पफलश्लक्ष्णचूर्णैर्माल्यं सुरूक्षितम् ।
वमेन्मंडरसादीनां तृप्तो जिघ्रन् सुखं सुखी ॥ १८ ॥
एवमेव फलाभावे कल्प्यं पुष्पं शलाटु वा ।
जीमूताद्याश्च फलवत्

जीमूतं तु विशेषतः ॥ १९ ॥
प्रयोक्तव्यं ज्वरश्वासकासहिध्मादिरोगिणाम् ।
पयः पुष्पेऽस्य निर्वृत्ते फले पेया पयस्कृता ॥ २० ॥
लोमशे क्षीरसंतानं दध्युत्तरमलोमशे ।
शृते पयसि दध्यम्लं जाते हरितपाण्डुके ॥ २१ ॥
आसुत्य वारुणीमंडं पिबेन्मृदितगालितम् ।
कफादरोचके कासे पाण्डुत्वे राजयक्ष्मणि ॥ २२ ॥
इयं च कल्पना कार्या तुंबीकोशातकीष्वपि ।
पर्यागतानां शुष्काणां फलानां वेणिजन्मनाम् ॥ २३ ॥
चूर्णस्य पयसा शुक्तिं वातपित्तार्दितः पिबेत् ।
द्वे वा त्रीण्यपि वा पोथ्य क्वाथे तिक्तोत्तमस्य वा ॥२४॥
आरग्वधादिनवकादासुत्यान्यतमस्य वा ।
विमृद्य पूतं तं क्वाथं पित्तश्लेष्मज्वरी पिबेत् ॥ २५ ॥
जीमूतचूर्णं कल्कं वा पिबेच्छीतेन वारिणा ।
ज्वरे पैत्ते कवोष्णेन कफवातात्कफादपि ॥ २६ ॥
कासश्वासविषच्छर्दिज्वरार्ते कफकर्शिते ।
इक्ष्वाकुर्वमने शस्तः प्रताम्यति च मानवे ॥ २७ ॥
फलपुष्पविहीनस्य प्रवालैस्तस्य साधितम् ।
पित्तश्लेष्मज्वरे क्षीरं पित्तोद्रिक्ते प्रयोजयेत् ॥ २८ ॥
हृतमध्ये फले जीर्णे स्थितं क्षीरं यदा दधि ।
स्यात्तदा कफजे कासश्वासे वम्यं च पाययेत् ॥ २९ ॥

मस्तुना वा फलान्मध्यं पांडुकुष्ठविषार्दितः ।
तेन तक्रं विपक्कं वा पिबेत्समधुसैंधवम् ॥ ३० ॥
भावयित्वाऽजदुग्धेन बीजं तेनैव वा पिबेत् ।
विषगुल्मोदरग्रंथिगंडेषु श्लीपदेषु च ॥ ३१ ॥
सक्तुभिर्वा पिबेन्मंथं तुंबीस्वरसभावितैः ।
कफोद्भवे ज्वरे कासे गलरोगेष्वरोचके ॥ ३२ ॥
गुल्मे ज्वरे प्रसक्ते च कल्कं मांसरसैः पिबेत् ।
नरः साधु वमत्येवं न च दौर्बल्यमश्नुते ॥ ३३ ॥
तुंब्याः फलरसैः शुष्कैः सपुष्पैरवचूर्णितम् ।
छर्दयेन्माल्यमाघ्राय गंधसंपत्सुखोचितः ॥ ३४ ॥
कासगुल्मोदरगरे वाते श्लेष्माशयस्थिते ।
कफे च कंठवक्त्रस्थे कफसंचयजेषु च ॥ ३५ ॥
धामार्गवो गदेष्विष्टः स्थिरेषु च महत्सु च ।
जीवकर्षभकौ वीरा कपिकच्छूः शतावरी ॥ ३६ ॥
काकोली श्रावणी मेदा महामेदा मधूलिका ।
तद्रजोभिः पृथग्लेहा धामार्गवरजोऽन्विताः ॥ ३७ ॥
कासे हृदयदाहे च शस्ता मधुसिताद्रुताः ।
ते सुखांभोनुपानाः स्युः पित्तोष्मसहिते कफे ॥३८॥
धान्यतुंबरुयूषेण कल्कस्तस्य विषापहः ।
बिंब्याः पुनर्नवाया वा कासमर्दस्य वा रसे ॥ ३९ ॥
एकं धामार्गवं द्वे वा मानसे मृदितं पिबेत् ।

तच्छृतक्षीरजं सर्पिः साधितं वा फलादिभिः ॥ ४० ॥
क्ष्वेडोऽतिकटुतीक्ष्णोष्णः प्रगाढेषु प्रशस्यते ।
कुष्ठपांड्वामयप्लीहशोफगुल्मगरादिषु ॥ ४१ ॥
पृथक् फलादिषट्कस्य क्वाथे मांसमनूपजम् ।
कोशातक्या समं सिद्धं तद्रसं लवणं पिबेत् ॥ ४२ ॥
फलादिपिप्पलीतुल्यं सिद्धं क्ष्वेडरसेऽथवा ।
क्ष्वेडक्वाथे पिबेत्सिद्धं मिश्रमिक्षुरसेन वा ॥ ४३ ॥
कुटजं सुकुमारेषु पित्तरक्तकफोदये ।
ज्वरे विसर्पे हृद्रोगे खुडे कुष्ठे च पूजितम् ॥ ४४ ॥
सर्षपाणां मधूकानां तोयेन लवणस्य वा ।
पाययेत्कौटजं बीजं युक्तं कृशरयाऽथवा ॥ ४५ ॥
सप्ताहं वार्कदुग्धाक्तं तच्चूर्णं पाययेत्पृथक् ।
फलजीमूतकेक्ष्वाकुजीवंतीजीवकोदकैः ॥ ४६ ॥
वमनौषधमुख्यानामिति कल्पदिगीरिता ।
बीजेनानेन मतिमानन्यान्यपि च कल्पयेत् ॥ ४७ ॥

---

## द्वितीयोऽध्यायः ।

अथाऽतो विरेचनकल्पं व्याख्यास्यामः ।
"कषाया मधुरा रूक्षा विपाके कटुका त्रिवृत् ।
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥ १ ॥
सेदानीमौषधैर्युक्ता वातपित्तकफापहैः ।

कल्पवैशेष्यमासाद्य जायते सर्वरोगजित् ॥ २ ॥
द्विधा ख्यातं च तन्मूलं श्यामं श्यामारुणं त्रिवृत् ।
त्रिवृदाख्यं वरतरं निरपायं सुखं तयोः ॥ ३ ॥
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तद्धितम् ।
मूर्छासंमोहहृत्कंठकर्षणक्षणनप्रदम् ॥ ४ ॥
श्यामं तीक्ष्णाशुकारित्वादतस्तदपि शस्यते ।
क्रूरे कोष्ठे बहौ दोषे क्लेशक्षमिणि चातुरे ॥ ५ ॥
गंभीरानुगतं श्लक्ष्णमतिर्यग्विसृतं च यत् ।
गृहीत्वा विसृजेत्काष्ठं त्वचं शुष्कां निधापयेत् ॥ ६ ॥
अथ काले तु तच्चूर्णं किंचिन्नागरसैंधवम् ।
वातामये पिबेदम्लैः पित्ते साज्यसितामधु ॥ ७ ॥
क्षीरद्राक्षेक्षुकाश्मर्यस्वादुस्कंधवरारसैः ॥
कफामये पीलुरसमूत्रमद्याम्लकांजिकैः ॥ ८ ॥
पंचकोलादिचूर्णैश्च युक्त्या युक्तं कफापहैः ।
त्रिवृत्कल्ककषायेण साधितःससितो हिमः ॥ ९ ॥
मधुत्रिजातसंयुक्तो लेहो हृद्यं विरेचनम् ।
अजगंधा तवक्षीरी विदारी शर्करा त्रिवृत् ॥ १० ॥
चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ।
संनिपातज्वरस्तंभपिपासादाहपीडितः ॥ ११ ॥
लिंपेदंतस्त्रिवृतया द्विधा कृत्वेक्षुगंडिकाः ।
एकीकृत्य पचेत्स्विन्नं पुटपाकेन भक्षयेत् ॥ १२ ॥

त्वगेलाभ्यां समा नीली तैस्त्रिवृत्तैश्च शर्करा ।
चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् ॥ १३ ॥
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ १४ ॥
विडंगतंडुलवरायावशूककणास्त्रिवृत् ।
सर्वेभ्योऽर्धेन तल्लीढं मध्वाज्येन गुडेन वा ॥ १५ ॥
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान्परिमार्ष्टि गदान्बहून् ॥ १६ ॥
विडंगपिप्पलीमूलत्रिफलाधान्यचित्रकम् ।
मरिचेंद्रयवाजाजीपिप्पलीहस्तिपिप्पलीः ॥ १७ ॥
दीप्यकं पंचलवणं चूर्णितं कार्षिकं पृथक् ।
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥ १८ ॥
धात्रीफलरसप्रस्थांस्त्रीन् गुडार्धतुलान्वितान् ।
पक्त्वा मृद्वग्निना खादेत्ततो मात्रामयंत्रणः ॥ १९ ॥
कुष्ठार्शःकामलागुल्ममेहोदरभगंदरान् ।
ग्रहणीपांडुरोगांश्च हंति पुंसवनश्च सः ॥ २० ॥
गुडः कल्याणको नाम सर्वेष्वृतुषु यौगिकः ।
व्योषत्रिजातकांभोदकृमिघ्नामलकैस्त्रिवृत् ॥ २१ ॥
सर्वैः समा समसिता क्षौद्रेण गुटिकाः कृताः ।
मूत्रकृच्छ्रज्वरच्छर्दिकासशोषभ्रमक्षये ॥ २२ ॥
तापे पांड्वामयेऽल्पेऽग्नौ शस्ताः सर्वविषेषु च ।

त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ॥ २३ ॥
क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम् ।
त्रिवृद्दुरालभामुस्तशर्करोदीच्यचंदनम् ॥ २४ ॥
द्राक्षांम्बुना सयष्ट्याह्वं सातलं जलदात्यये ।
त्रिवृतां चित्रकं पाठामसाजीं सरलं वचाम् ॥ २५ ॥
स्वर्णक्षीरीं च हेमंते चूर्णमुष्णांबुना पिबेत् ।
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ॥ २६ ॥
त्रिवृत्त्रायंतिहपुषासातलाकटुरोहिणीः ।
स्वर्णक्षीरीं च संचूर्ण्य गोमूत्रे भावयेत्र्यहम् ॥ २७ ॥
एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ।
श्यामात्रिवृद्दुरालंभाहस्तिपिप्पलिवत्सकम् ॥ २८ ॥
नीलिनीकटुकामुस्ताश्रेष्ठायुक्तं सुचूर्णितम् ।
रसाज्योष्णाम्बुभिः शस्तं रूक्षाणामपि सर्वदा ॥ २९ ॥
ज्वरहृद्रोगवातासृगुदावर्तादिरोगिषु ।
राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ॥ ३० ॥
बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ।
योज्यो मृद्वनपायित्वाद्विशेषाच्चतुरंगुलः ॥ ३१ ॥
फलकाले परिणतं फलं तस्य समाहरेत् ।
तेषां गुणवतां भारं सिकतासु विनिक्षिपेत् ॥ ३२ ॥
सप्तरात्रात्समुद्धृत्य शोषयेच्चातपे ततः ।
ततो मज्जानमुद्धृत्य शुचौ पात्रे निधापयेत् ॥ ३३ ॥

द्राक्षारसेन तं दद्याद्दाहोदावर्तपीडिते ।
चतुर्वर्षे सुखं बाले यावद्द्वादशवार्षिके ॥ ३४ ॥
चतुरंगुलमज्ज्ञो वा कषायं पाययेद्द्विमम् ।
दधिमंडसुरामंडधात्रीफलरसैः पृथक् ॥ ३५ ॥
सौवीरकेण वा युक्तं कल्केन त्रैवृतेन वा ।
दन्तीकषाये तन्मज्ज्ञो गुडं जीर्णं च निक्षिपेत् ॥ ३६ ॥
तमरिष्टं स्थितं मासं पाययेत् पक्षमेव वा ।
त्वचं तिल्वकमूलस्य त्यक्त्वाभ्यंतरवल्कलम् ॥ ३७ ॥
विशोष्य चूर्णयित्वा च द्वौ भागौ गालयेत्ततः ।
रोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥ ३८ ॥
कषाये दशमूलस्य तं भागं भावितं पुनः ।
शुष्कं चूर्णं पुनः कृत्वा ततः पाणितलं पिबेत् ॥३९॥
मस्तुमूत्रसुरामंडकोलधात्रीफलांबुभिः ।
तिल्वकस्य कषायेण कल्केन च सशर्करः ॥ ४० ॥
सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ।
सुधा भिनत्ति दोषाणां महांतमपि संचयम् ॥ ४१ ॥
आश्वेव कोष्ठविभ्रंशान्नैव तां कल्पयेदतः ।
मृदौ कोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि ॥ ४२ ॥
कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु ।
पांडौ दूषीविषे शोफे दोषविभ्रांतचेतसि ॥ ४३ ॥
सा श्रेष्ठा कंटकैस्तीक्ष्णैर्बहुभिश्च समाचिता ।

द्विवर्षां वा त्रिवर्षां वा शिशिरांते विशेषतः ॥ ४४ ॥
तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः ।
बिल्वादीनां बृहत्योर्वा क्वाथेन सममेकशः ॥ ४५ ॥
मिश्रयित्वा सुधाक्षीरं ततोऽङ्गारेषु शोषयेत् ।
पिबेत्कृत्वा तु गुटिकां मस्तुमूत्रसुरादिभिः ॥ ४६ ॥
त्रिवृतादीन्नव वरां स्वर्णक्षीरीं सप्तलाम् ।
सप्ताहं स्नुक्पयःपीतान् रसेनाज्येन वा पिबेत् ॥४७॥
तद्वद्व्योषोत्तमाकुंभनिकुंभादीन् गुडांबुना ।
नातिशुष्कं फलं ग्राह्यं शंखिन्या निस्तुषीकृतम् ॥४८॥
सप्तलायास्तथा मूलं ते तु तीक्ष्णविकाषिणी ।
श्लेष्मामयोदरगरश्वयथ्वादिषु कल्पयेत् ॥ ४९ ॥
अक्षमात्रं तयोः पिंडं मदिरालवणान्वितम् ।
हृद्रोगे वातकफजे तद्वद्गुल्मे प्रयोजयेत् ॥ ५० ॥
दंतिदंतस्थिरं स्थूलं मूलं दंतीद्रवंतिजम् ।
आताम्रश्यावतीक्ष्णोष्णमाशुकारि विकाशि च ॥५१॥
गुरु प्रकोपि वातस्य पित्तश्लेष्मविलायनम् ।
तत्क्षौद्रपिप्पलीलिप्तं स्वेद्यं मृद्दर्भवेष्टितम् ॥ ५२ ॥
शोष्यं मंदातपेऽग्न्यर्कौ हतो ह्यस्य विकाशिताम् ।
तत्पिबेन्मस्तुमदिरातक्रपीलुरसासवैः ॥ ५३ ॥
अभिष्यन्नतनुर्गुल्मी प्रमेही जठरी गरी ।
गोमूत्रगाजरसैः पांडुः कृमिकोष्ठी भगंदरी ॥ ५४ ॥

सिद्धं तत्काथकल्काभ्यां दशमूलरसेन च ।
विसर्पविद्रध्यलजीकक्षादाहान् जयेद्घृतम् ॥ ५५ ॥
तैलं तु गुल्ममेहार्शोविबंधकफमारुतान् ।
महास्नेहः शकृच्छुक्रवातसंगानिलव्यथाः ॥ ५६ ॥
विरेचने मुख्यतमा नवैते त्रिवृदादयः ।
हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत् ॥ ५७ ॥
गुडस्याष्टपले पथ्या विंशतिः स्यात्पलं पलम् ।
दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥ ५८ ॥
प्रकल्प्य मोदकानेवं दशमे दशमेऽहनि ।
उष्णाम्भोऽनु पिबेत्खादेत्तान्सर्वान्विधिनाऽमुना ॥५९॥
एते निःपरिहाराः स्युः सर्वव्याधिनिबर्हणाः ।
विशेषाद्ग्रहणीपांडुकंडूकोठार्शसां हिताः ॥ ६० ॥
अल्पस्याऽपि महार्थत्वं प्रभूतस्याऽल्पकर्मताम् ।
कुर्यात्संश्लेषविश्लेषकालसंस्कारयुक्तिभिः ॥ ६१ ॥
त्वक्केसराम्रातकदाडिमैला
सितोपलामाक्षिकमातुलुंगैः ।
मद्यैश्च तैस्तैश्च मनोनुकूलै-
र्युक्तानि देयानि विरेचनानि" ॥ ६२ ॥

---

## तृतीयोऽध्यायः ।

अथाऽतो वमनविरेचनव्यापत्सिद्धिं व्याख्यास्यामः ।
"वमनं मृदुकोष्ठेन क्षुद्वताऽल्पकफेन वा ।

अतितीक्ष्णहिमस्तोकमजीर्णे दुर्बलेन वा । ॥ १ ॥
पीतं प्रयात्यधस्तस्मिन्निष्टहानिर्मलोदयः ।
वामयेत्तं पुनः स्निग्धं स्मरन् पूर्वमतिक्रमम् ॥ २ ॥
अजीर्णिनः श्लेष्मवतो व्रजत्यूर्ध्वं विरेचनम् ।
अतितीक्ष्णोष्णलवणमहृद्यमतिभूरि वा ॥
तत्र पूर्वोदिता व्यापत्सिद्धिश्च न तथापि चेत् ॥ ३ ॥
आशये तिष्ठति ततस्तृतीयं नावचारयेत् ।
अन्यत्र सात्म्याद्धृद्याद्वा भेषजान्निरपायतः ॥ ४ ॥
अस्निग्धस्विन्नदेहस्य पुराणं रूक्षमौषधम् ।
दोषानुत्क्लेश्य निर्हर्तुमशक्तं जनयेद्गदान् ॥ ५ ॥
विभ्रंशं श्वयथुं हिध्मं तमसो दर्शनं तृषम् ।
पिंडिकोद्वेष्टनं कंडूमूर्वोः सादं विवर्णताम् ॥ ६ ॥
स्निग्धस्विन्नस्य वाल्पं दीप्ताग्नेर्जीर्णमौषधम् ।
शीतैर्वा स्तब्धमामे वा समुत्क्लेश्य हरेन्मलान् ॥ ७ ॥
तानेव जनयेद्रोगानयोगः सर्व एव सः ।
तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरशंकरैः ॥ ८ ॥
निरूढं जांगलरसैर्भोजयित्वाऽनुवासयेत् ।
फलमागधिकादारुसिद्धतैलेन मात्रया ॥ ९ ॥
स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन शोधयेत् ।
बहुदोषस्य रूक्षस्य मंदाग्नेरल्पमौषधम् ॥ १० ॥
सोदावर्तस्य चोत्क्लेश्य दोषान्मार्गं निरुध्य तैः ।

भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वशिरोरुजम् ॥ ११ ॥
श्वासं विण्मूत्रवातानां सङ्गं कुर्याच्च दारुणम् ।
अभ्यंगस्वेदवर्त्यादिसनिरूहानुवासनम् ॥ १२ ॥
उदावर्तहरं सर्वं कर्माध्मातस्य शस्यते ।
पंचमूलयवक्षारवचाभूतिकसैंधवैः ॥ १३ ॥
यवागूः सुकृता शूलविबंधानाहनाशनी ।
पिप्पलीदाडिमक्षारहिंगशुंठ्यम्लवेतसान् ॥ १४ ॥
ससैंधवान्पिबेन्मद्यैः सर्पिषोष्णोदकेन वा ।
प्रवाहिकापरिस्रावे वेदनापरिकर्तने ॥ १५ ॥
पीतौषधस्य वेगानां निग्रहान्मारुतादयः ।
कुपिता हृदयं गत्वा घोरं कुर्वंति हृद्ग्रहम् ॥ १६ ॥
हिध्मापार्श्वरुजाकासदैन्यलालाक्षिविभ्रमैः ।
जिह्वां खादति निःसंज्ञो दंतान्कटकटाययन् ॥ १७ ॥
न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक् ।
मधुरैः पित्तमूर्च्छार्तं कटुभिः कफमूर्च्छितम् ॥ १८ ॥
पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत् ॥
कायाऽग्निं च बलं चास्य क्रमेणाऽभिप्रवर्तयेत् ॥१९॥
पवनेनाऽतिवमतो हृदयं यस्य पीड्यते ।
तस्मै स्निग्धाम्ललवणं दद्यात्पित्तकफेऽन्यथा ॥ २० ॥
पीतौषधस्य वेगानां निग्रहेण कफेन वा ।
रुद्धोऽति वा विशुद्धस्य गृह्णात्यंगानि मारुतः ॥ २१ ॥

स्तंभवेपथुनिस्तोदसादोद्वेष्टार्तिभेदनैः ।
तत्र वातहरं सर्वं स्नेहस्वेदादि शस्यते ॥ २२ ॥
बहुतीक्ष्णं क्षुधार्तस्य मृदुकोष्ठस्य भेषजम् ।
हृत्वाऽऽशु विट्पित्तकफान्धातूनास्रावयेद्द्रवान् ॥२३॥
तत्रातियोगे मधुरैः शेषमौषधमुल्लिखेत् ।
योज्योऽतिवमने रेको विरेके वमनं मृदु ॥ २४ ॥
परिषेकावगाहाद्यैः सुशीतैः स्तंभयेच्च तम् ।
अंजनं चंदनोशीरमज्जासृक्शर्करोदकम् ॥ २५ ॥
लाजचूर्णैः पिबेन्मंथमतियोगहरं परम् ।
वमनस्याऽतियोगे तु शीतांबुपरिषेचितः ॥ २६ ॥
पिबेत्फलरसैर्मंथं सघृतक्षौद्रशर्करम् ।
सोद्गारायां भृशं छर्द्यां मूर्वाया धान्यमुस्तयोः ॥२७॥
समधूकांजनं चूर्णं लेहयेन्मधुसंयुतम् ।
वमतोऽतःप्रविष्टायां जिह्वायां कवलग्रहाः ॥ २८ ॥
स्निग्धाम्ललवणा हृद्या यूषमांसरसा हिताः ।
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः ॥२९॥
निःसृतां तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ।
वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम् ॥ ३० ॥
यवागूं तनुकां दद्यात्स्नेहस्वेदौ च कालवित् ।
अतियोगाच्च भेषज्यं जीवं हरति शोणितम् ॥ ३१ ॥
तज्जीवादानमित्युक्तमादत्ते जीवितं यतः ।

शुने काकाय वा दद्यात्तेनान्नमसृजा सह ॥ ३२ ॥
भुक्ते तस्मिन् वदेज्जीवमभुक्ते पित्तमादिशेत् ।
शुक्लं वा भावितं वस्त्रमावानं कोष्णवारिणा ॥ ३३ ॥
प्रक्षालितं विवर्णं स्यात्पित्ते शुद्धं तु शोणिते ।
तृष्णामूर्छामदार्तस्य कुर्यादामरणं क्रियाम् ॥ ३४ ॥
रक्तपित्तातिसारघ्नीं तस्याशु प्राणरक्षणीम् ।
मृगगोमहिषाजानां सद्यस्कं जीवतामसृक् ॥ ३५ ॥
पिबेज्जीवाभिसंधानं जीवं तद्ध्याशु यच्छति ।
तदेव दर्भमृदितं रक्तं बस्तौ निषेचयेत् ॥ ३६ ॥
श्यामाकाश्मर्यमधुकदूर्वोशीरैः श्रृतं पयः ।
घृतमंडांजनयुतं बस्तिं वा योजयेद्धिमम् ॥ ३७ ॥
पिच्छाबस्तिं सुशीतं वा घृतमंडानुवासनम् ।
गुदं भ्रष्टं कषायैश्च स्तंभयित्वा प्रवेशयेत् ॥
विसंज्ञं श्रावयेत्साम वेणुगीतादिनिस्वनम्'' ॥ ३८ ॥

---

## चतुर्थोऽध्यायः ।

अथाऽतो दोषहरणसाकल्यं बस्तिकल्पं व्याख्यास्यामः ।

''बलां गुडूचीं त्रिफलां सरास्नां
द्विपंचमूलं च पलोन्मितानि ।
अष्टौ फलान्यर्धतुलां च मांसा-
च्छागात्पचेदप्सु चतुर्थशेषम् ॥ १ ॥

पूतो यवानीफलबिल्वकुष्ठ-
वचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुडक्षौद्रघृतैः सतैलै-
र्युक्तः सुखोष्णो लवणान्वितश्च ॥ २ ॥
बस्तिः परं सर्वगदप्रमाथी
स्वस्थे हितो जीवनबृंहणश्च ।
बस्तौ च यस्मिन्पठितो न कल्कः
सर्वत्र दद्यादमुमेव तत्र ॥ ३ ॥
द्विपंचमूलस्य रसोऽम्लयुक्तः
सच्छागमांसस्य सपूर्वकल्कः ।
त्रिस्नेहयुक्तः प्रवरो निरूहः
सर्वानिलव्याधिहरः प्रदिष्टः ॥ ४ ॥
बलापटोलीलघुपंचमूल-
त्रायन्तिकैरंडयवात्सुसिद्धात् ।
प्रस्थो रसाच्छागरसार्धयुक्तः
साध्यः पुनः प्रस्थसमः स यावत् ॥ ५ ॥
प्रियंगुकृष्णाघनकल्कयुक्तः
सतैलसर्पिर्मधुसैंधवश्च ।
स्याद्दीपनो मांसबलप्रदश्च
चक्षुर्बलं चोपदधाति सद्यः ॥ ६ ॥
एरंडमूलात्त्रिपलं पलाशा-

त्तथा पलांशं लघुपंचमूलम् ।
रास्नाबलाछिन्नरुहाश्वगंधा-
पुनर्नवारग्वधदेवदारु ॥ ७ ॥
फलानि चाऽष्टौ सलिलाढकाभ्यां
विपाचयेदष्टमशेषितेऽस्मिन् ।
वचाशताह्वाहपुषाप्रियंगु-
यष्टीकणावत्सकबीजमुस्तम् ॥ ८ ॥
दद्यात्सुपिष्टं सहताक्ष्यंशैल-
मक्षप्रमाणं लवणांशयुक्तम् ।
समाक्षिकस्तैलयुतः समूत्रो
बस्तिर्जयेल्लेखनदीपनोऽसौ ॥ ९ ॥
जंघोरुपादत्रिकपृष्ठकोष्ठ-
हृद्गुह्यशूलं गुरुतां विबंधम् ।
गुल्माश्मवर्ध्मग्रहणीगुदोत्थां-
स्तांस्तांश्च रोगान्कफवातजातान् ॥ १० ॥
यष्ट्याह्वरोध्राभयचंदनैश्च
श्रृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्कराक्षौद्रघृतं सुशीतं
पित्तामयान्हंति सजीवनीयम् ॥ ११ ॥
रास्नां वृषं लोहितिकामनंतां
बलां कनीयस्तृणपंचमूल्यौ ।

गोपांगनाचंदनपद्मकर्द्धी-
यष्ट्याह्वरोध्राणि पलार्धकानि ॥ १२ ॥
निःक्काथ्य तोयेन रसेन तेन
शृतं पयोर्धाढकमंबुहीनम् ।
जीवंतिमेदर्द्धिवरीविदारी-
वीराद्विकाकोलिकसेरुकाभिः ॥ १३ ॥
सितोपलाजीवकपद्मरेणु-
प्रपौंडरीकोत्पलपुंडरीकैः ।
लोहात्मगुप्तामधुयष्टिकाभि-
र्नागाह्वमुंजातकचंदनैश्च ॥ १४ ॥
पिष्टैर्घृतक्षौद्रयुतैर्निरूहं
ससैंधवं शीतलमेव दद्यात् ।
प्रत्यागते धन्वरसेन शालीन्
क्षीरेण वाऽद्यात्परिषिक्तगात्रः ॥ १५ ॥
दाहातिसारप्रदरास्रपित्त-
हृत्पांडुरोगान्विषमज्वरं च ।
सगुल्ममूत्रग्रहकामलादीन्
सर्वामयान् पित्तकृतान्निहंति ॥ १६ ॥
कोशातकारग्वधदेवदारु-
मूर्वाश्वदंष्ट्राकुटजार्कपाठाः ।
पक्त्वा कुलत्थान्बृहतीं च तोये

रसस्य तस्य प्रसृता दश स्युः ॥ १७ ॥
तान् सर्षपैलामदनैः सकुष्ठ-
रक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
क्षौद्रस्य तैलस्य फलाह्वयस्य
क्षारस्य तैलस्य ससर्पिषश्च ॥ १८ ॥
दद्यान्निरूहं कफरोगिताय
मंदाग्नये चाशनविद्विषे च ।
वक्ष्ये मृदून्स्नेहकृतो निरूहान्
सुखोचितानां प्रसृतैः पृथक् स्युः ॥ १९ ॥
अथेमान्सुकुमाराणां निरूहान् स्नेहनान्मृदून् ।
कर्मणा विप्लुतानां तु वक्ष्यामि प्रसृतैः पृथक् ॥ २० ॥
क्षीराद् द्वौ प्रसृतौ कार्यौ मधुतैलघृतात्त्रयः ।
खजेन मथितो बस्तिर्वातघ्नो बलवर्णकृत् ॥ २१ ॥
एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ।
बिल्वादिमूलक्वाथाद् द्वौ कौलत्थाद् द्वौ स
वातजित् ॥ २२ ॥
पटोलनिंबभूतीकरास्नासप्तच्छदांभसः ।
प्रसृतः पृथगाज्याच्च बस्तिः सर्षपकल्कवान् ॥ २३ ॥
सपंचतिक्तोभिष्यंदकृमिकुष्ठप्रमेहहा ।
चत्वारस्तैलगोमूत्रदधिमंडाम्लकांजिकात् ॥ २४ ॥
प्रसृताः सर्षपैः पिष्टैर्विट्संगानाहभेदनः ।

पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम् ॥ २५ ॥
एकैकप्रसृतो बस्तिः कृष्णाकल्को वृषत्वकृत् ।
सिद्धबस्तीनतो वक्ष्ये सर्वदा यान्प्रयोजयेत् ॥ २६ ॥
निर्व्यापदो बहुफलान्बलपुष्टिकरान् सुखान् ।
मधुतैले समे कर्षः सैंधवाद् द्विपिचुर्मिसिः ॥ २७ ॥
एरंडमूलक्काथेन निरूहो मधुतैलिकः ।
रसायनं प्रमेहार्शःकृमिगुल्मांत्रवृद्धिनुत् ॥ २८ ॥
सयष्टिमधुकश्चैष चक्षुष्यो रक्तपित्तजित् ।
यापनो घनकल्केन मधुतैलरसाज्यवान् ॥ २९ ॥
पायुजंघोरुवृषणबस्तिमेहनशूलजित् ।
प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत् ॥ ३० ॥
एरंडमूलनिःक्काथो मधुतैलः ससैंधवः ।
एष युक्तरथो बस्तिः सवचापिप्पलीफलः ॥ ३१ ॥
सक्काथो मधुषड्ग्रंथाशताह्वाहिंगुसैंधवः ।
सुरदारुवचारास्नाबस्तिर्दोषहरः परः ॥ ३२ ॥
पंचमूलस्य निःक्काथस्तैलं मागधिका मधु ।
ससैंधवः समधुकः सिद्धबस्तिरिति स्मृतः ॥ ३३ ॥
द्विपंचमूलत्रिफलाफलबिल्वानि पाचयेत् ।
गोमूत्रेण च पिष्टैश्च पाठावत्सकतोयदैः ॥ ३४ ॥
सफलैः क्षौद्रतैलाभ्यां क्षारेण लवणेन च ।
युक्तो बस्तिः कफव्याधिपांडुरोगविसूचिषु ॥ ३५ ॥

शुक्रानिलविबंधेषु वस्त्याटोपे च पूजितः ।
मुस्तापाठामृतैरंडबलारास्नापुनर्नवान् ॥ ३६ ॥
मंजिष्ठारग्वधोशीरत्रायमाणाक्षरोहिणीः ।
कनीयः पंचमूलं च पालिकं मदनाष्टकम् ॥ ३७ ॥
जलाढके पचेत्तच्च पादशेषं परिस्रुतम् ।
क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत् ॥ ३८ ॥
सपादजांगलरसः ससर्पिर्मधुसैंधवः ।
पिष्टैर्यष्टिमिसिश्यामाकलिंगकरसांजनैः ॥ ३९ ॥
वस्तिः सुखोष्णो मांसाग्निबलशुक्रविवर्धनः ।
वातासृङ्मोहमेहार्शोगुल्मविण्मूत्रसंग्रहम् ॥ ४० ॥
विषमज्वरवीसर्पवर्ध्माध्मानप्रवाहिकाः ।
वंक्षणोरुकटीकुक्षिमन्याश्रोत्रशिरोरुजः ॥ ४१ ॥
हन्यादसृग्दरोन्मादशोफकासाश्मकुंडलान् ।
चक्षुष्यः पुत्रदो राज्ञां यापनानां रसायनम् ॥ ४२ ॥
मृगानां लघुबभ्रूणां दशमूलस्य चांभसा ।
हपुषामिसिगांगेयीकल्कैर्वातहरः परम् ॥ ४३ ॥
निरूहोत्यर्थवृष्यश्च महास्नेहसमन्वितः ।
मयूरं पक्षपित्तांत्रपादविट्तुंडवर्जितम् ॥ ४४ ॥
लघुना पंचमूलेन पालिकेन समन्वितम् ।
पक्त्वा क्षीरजले क्षीरशेषं सघृतमाक्षिकम् ॥ ४५ ॥
तद्विदारीकणायष्टीशताह्वाफलकल्कवत् ।

बस्तिरीषत्पटुयुतः परमं बलशुक्रकृत् ॥ ४६ ॥
कल्पनेयं पृथक् कार्या तित्तिरिप्रभृतिष्वपि ।
विष्किरेषु समस्तेषु प्रतुदप्रसहेषु च ॥ ४७ ॥
जलचारिषु तद्वच्च मत्स्येषु क्षीरवर्जिता ।
गोधानकुलमार्जारशल्यकोंदुरजं पलम् ॥ ४८ ॥
पृथक् दशपलं क्षीरे पंचमूलं च साधयेत् ।
तत्पयः फलवैदेहीकल्कद्विलवणान्वितम् ॥ ४९ ॥
ससितातैलमध्वाज्यो बस्तिर्योज्यो रसायनम् ।
व्यायाममथितोरस्कक्षीणेंद्रियबलौजसाम् ॥ ५० ॥
विबद्धशुक्रविण्मूत्रखुडवातविकारिणाम् ।
गजवाजिरथक्षोमभग्नजर्जरितात्मनाम् ॥ ५१ ॥
पुनर्नवत्वं कुरुते वाजीकरणसत्तमः ।
सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटेक्षुरैः ॥ ५२ ॥
स्नेहांश्चायत्रणान् सिद्धान्सिद्धद्रव्यैः प्रकल्पयेत् ।
दोषघ्नाः सपरीहारा वक्ष्यंते स्नेहबस्तयः ॥ ५३ ॥
दशमूलं बलां रास्नामश्वगंधां पुनर्नवाम् ।
गुडूच्यैरंडभूतीकभार्गीवृषकरोहिषम् ॥ ५४ ॥
शतावरीं सहचरं काकनासां पलांशकम् ।
यवमाषातसीकोलकुलत्थान्प्रसृतोन्मितान् ॥ ५५ ॥
वहे विपाच्य तोयस्य द्रोणशेषेण तेन च ।
पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ॥ ५६ ॥

---

१ जीवनीयैः पुष्पैः ।

अनुवासनमित्येतत्सर्ववातविकारनुत् ।
अनूपानां वसा तद्वज्जीवनीयोपसाधिता ॥ ५७ ॥
शताह्वाचिरिबिल्वाम्लैस्तैलं सिद्धं समीरणे ।
सैंधवेनाग्निवर्णेन तप्तं वाऽनिलजिद् घृतम् ॥ ५८ ॥
जीवंतीं मदनं मेदां श्रावणीं मधुकं बलाम् ।
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥ ५९ ॥
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शठीं वचाम् ।
पिष्ट्वा तैलघृतं क्षीरे साधयेत्तच्चतुर्गुणे ॥ ६० ॥
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम् ।
रजःशुक्रामयहरं पुत्रीयमनुवासनम् ॥ ६१ ॥
सैंधवं मदनं कुष्ठं शताह्वा निचुलो वचा ।
ह्रीबेरं मधुकं भार्गी देवदारुसकट्फलम् ॥ ६२ ॥
नागरं पुष्करं मेदा चविका चित्रकः शठी ।
विडंगातिविषा श्यामा हरेणुर्नीलिनी स्थिरा ॥ ६३ ॥
बिल्वाजमोदचपला दंती रास्ना च तैः समैः ।
साध्यमेरंडतैलं वा तैलं वा कफरोगनुत् ॥ ६४ ॥
वर्ध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ॥ ६५ ॥
साधितं पंचमूलेन तैलं बिल्वादिनाऽथवा ।
कफघ्नं कल्पयेत्तैलं द्रव्यैर्वा कफघातिभिः ॥ ६६ ॥
फलैरष्टगुणैश्चाम्लैः सिद्धमन्वासनं कफे ।

मृदुबस्तिजडीभूते तीक्ष्णोऽन्यो बस्तिरिष्यते ॥ ६७ ॥
तीक्ष्णैर्विकर्षिते स्निग्धो मधुरः शिशिरो मृदुः ।
तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसर्षपैः ।
प्राप्तकालं विधातव्यं घृतक्षीरैस्तु मार्दवम् ॥ ६८ ॥
बलकालरोगदोषप्रकृतीः प्रविभज्य योजितो बस्तिः ।
स्वैः स्वैरौषधवर्गैः स्वान् स्वान् रोगान्निवर्तयति ॥६९॥
उष्णार्तानां शीतांश्छीतार्तानां तथा सुखोष्णांश्च ।
तद्योग्यौषधयुक्तान्बस्तीन्संतर्क्य युंजीत ॥ ७० ॥
बस्तीन्न बृंहणीयान् दद्याद्व्याधिषु विशोधनीयेषु ।
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः ॥ ७१ ॥
न क्षीणक्षतदुर्बलमूर्च्छितकृशशुष्कशुद्धदेहानाम् ।
दद्याद्विशोधनीयान् दोषनिबद्धायुषो ये च" ॥ ७२ ॥

---

## पञ्चमोऽध्यायः ।

अथाऽतो बस्तिव्यापत्सिद्धिं व्याख्यास्यामः ।
"अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ।
शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥ १ ॥
बस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।
करोत्ययोगं तेन स्याद्वातमूत्रशकृद्ग्रहः ॥ २ ॥
नाभिबस्तिरुजादाहो हृल्लेपः श्वयथुर्गुदे ।
कंडूर्गंडानि वैवर्ण्यमरतिर्वह्निमार्दवम् ॥ ३ ॥

क्वाथद्वयं प्राग्विहितं मध्यदोषेऽतिसारिणि ।
उष्णस्य तस्माद्ध्येकस्य तत्र पानं प्रशस्यते ॥ ४ ॥
फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ।
बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ॥ ५ ॥
सुरादिमांस्तत्र बस्तिः स प्राक्पेष्यस्तमानयेत् ।
युक्तोल्पवीर्यो दोषाढ्ये रूक्षे क्रूराशयेऽथवा ॥ ६ ॥
बस्तिर्दोषावृतो रुद्धमार्गो रुंद्ध्यात्समीरणम् ।
सविमार्गोनिलः कुर्यादाध्मानं मर्मपीडनम् ॥ ७ ॥
विदाहं गुदकोष्ठस्य मुष्कवंक्षणवेदनाम् ।
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ॥ ८ ॥
स्वभ्यक्तस्विन्नगात्रस्य तत्र वर्तिं प्रयोजयेत् ।
बिल्वादिश्च निरूहः स्यात्पीलुसर्षपमूत्रवान् ॥ ९ ॥
सरलामरदारुभ्यां साधितं वाऽनुवासनम् ।
कुर्वतो वेगसंरोधं पीडितो वाऽतिमात्रया ॥ १० ॥
अस्निग्धलवणोष्णो वा बस्तिरल्पोल्पभेषजः ।
मृदुर्वा मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकात् ॥ ११ ॥
निरेति मूर्छाहृल्लासतृड्दाहादीन्प्रवर्तयन् ।
मूर्छाविकारं दृष्ट्वास्य सिंचेच्छीतांबुना मुखम् ॥ १२ ॥
व्यजेदाक्रमनाशाच्च प्राणायामं च कारयेत् ।
पृष्ठपार्श्वोदरं मृज्यात्करैरुष्णैरधोमुखम् ॥ १३ ॥
केशेषूत्क्षिप्य धुन्वीत भीषयेद्व्यालदंष्ट्रिभिः ।

शस्त्रोल्काराजपुरुषैर्बस्तिरेति तथा ह्यधः ॥ १४ ॥
पाणिवस्त्रैर्गलापीडं कुर्यान्न म्रियते यथा ।
प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायनः ॥ १५ ॥
अपानः पवनो बस्तिं तमाश्वेवापकर्षति ।
कुष्ठक्रमुककल्कं च पाययेताम्लसंयुतम् ॥ १६ ॥
औष्ण्यात्तैक्ष्ण्यात्सरत्वाच्च बस्तिं सोऽस्यानुलोमयेत् ।
गोमूत्रेण त्रिवृत्पथ्याकल्कं चाधोनुलोसनम् ॥ १७ ॥
पक्वाशयस्थिते स्विन्ने निरूहो दशमूलिकः ।
यवकोलकुलत्थैश्च विधेयो मूत्रसाधितः ॥ १८ ॥
बस्तिर्गोमूत्रसिद्धैर्वा साम्रतावंशपल्लवैः ।
पूतीकरंजत्वक्पत्रशठीदेवाह्वरोहिषैः ॥ १९ ॥
सतैलगुडसिंधूत्थो विरेकौषधकल्कवान् ।
बिल्वादिपंचमूलेन सिद्धो बस्तिरुरःस्थिते ॥ २० ॥
शिरःस्थे नावनं धूमः प्रच्छाद्यं सर्षपैः शिरः ।
बस्तिरत्युष्णतीक्ष्णाम्लघनोऽतिस्वेदितस्य वा ॥ २१ ॥
अल्पे दोषे मृदौ कोष्ठे प्रयुक्तो वा पुनःपुनः ।
अतियोगत्वमापन्नो भवेत्कुक्षिरुजाकरः ॥ २२ ॥
विरेचनातियोगेन स तुल्याकृतिसाधनः ।
बस्तिः क्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य वा ॥२३॥
गुदं दहन् लिखन् क्षिण्वन्करोत्यस्य परिस्रवम् ।
सविदग्धं स्रवत्यस्रं वर्णैः पित्तं च भूरिभिः ॥ २४ ॥

बहुशश्चातिवेगेन मोहं गच्छति सोऽसकृत् ।
रक्तपित्तातिसारघ्नी क्रिया तत्र प्रशस्यते ॥ २५ ॥
दाहादिषु त्रिवृत्कल्कं मृद्वीकावारिणा पिबेत् ।
तद्धि पित्तशकृद्वातान्हत्वा दाहादिकाञ्जयेत् ॥ २६ ॥
विशुद्धश्च पिबेच्छीतां यवागूं शर्करायुताम् ।
युंज्याद्वातिविरिक्तस्य क्षीणविड्कस्य भोजनम् ॥ २७ ॥
माषयूषेण कुल्माषान्पानं दध्यथवा सुराम् ।
सिद्धिर्बस्त्यापदामेवं स्नेहबस्तेस्तु वक्ष्यते ॥ २८ ॥
शीतोल्पो वाऽधिके वाते पित्तेत्युष्णः कफे मृदुः ।
अतिभुक्ते गुरुर्वर्चःसंचयेऽल्पबलस्तथा ॥ २९ ॥
दत्तस्तैरावृतस्नेहो नायात्यभिभवादपि ।
स्तंभोरुसदनाध्मानज्वरशूलांगमर्दनैः ॥ ३० ॥
पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम् ।
स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैलिकैः ॥ ३१ ॥
सौवीरकसुराकोलकुलत्थयवसाधितैः ।
निरूहैर्निर्हरेत्सम्यक् समूत्रैः पंचमूलकैः ॥ ३२ ॥
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ।
तृड्दाहरागसंमोहवैवर्ण्यतमकज्वरैः ॥ ३३ ॥
विद्यात्पित्तावृतं स्वादुतिक्तैस्तं बस्तिभिर्हरेत् ।
तंद्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ॥ ३४ ॥
संमूर्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम् ।

कषायतिक्तकटुकैः सुरामूत्रोपसाधितैः ॥ ३५ ॥
फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत् ।
छर्दिमूर्छारुचिग्लानिशूलनिद्रांगमर्दनैः ॥ ३६ ॥
आमलिंगैः सदाहैस्तं विद्यादत्यशनावृतम् ।
कटूनां लवणानां च क्राथैश्चूर्णैश्च पाचनम् ॥ ३७ ॥
मृदुर्विरेकः सर्वं च तत्रामविहितं हितम् ।
विण्मूत्रानिलसंगार्तिगुरुत्वाध्मानहृद्ग्रहैः ॥ ३८ ॥
स्नेहं विडावृतं ज्ञात्वा स्नेहस्वेदैः सवर्तिभिः ।
श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ॥ ३९ ॥
निर्हरेद्विधिना सम्यगुदावर्तहरेण च ।
अभुक्ते शूनपायौ वा पेयामात्राशितस्य च ॥ ४० ॥
गुदे प्रणिहितः स्नेहो वेगाद्धावत्यनावृतः ।
ऊर्ध्वं कायं ततः कंठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥ ४१ ॥
मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ।
तत्सिद्धतैलो देयः स्यान्निरूहः सानुवासनः ॥ ४२ ॥
कंठादागच्छतः स्तंभकंठग्रहविरेचनैः ।
छर्दिघ्नीभिः क्रियाभिश्च तस्य कुर्यान्निबर्हणम् ॥४३॥
नापक्वं प्रणयेत्स्नेहं गुदं स ह्युपलिंपति ।
ततः कुर्यात्सतृण्मोहकंडूशोफान् क्रियाऽत्र च ॥ ४४ ॥
तीक्ष्णो बस्तिस्तथा तैलमर्कपत्ररसे शृतम् ।
अनुच्छ्वास्य तु बद्धे वा दत्ते निःशेष एव च ॥ ४५ ॥

प्रविश्य क्षुभितो वायुः शूलतोदपरो भवेत् ।
तत्राभ्यंगो गुदे स्वेदो वातघ्नान्यशनानि च ॥ ४६ ॥
द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ।
स्यात्कटीगुदजंघोरुबस्तिस्तंभार्तिभेदनम् ॥ ४७ ॥
भोजनं तत्र वातघ्नं स्वेदाभ्यंगाः सबस्तयः ।
पीड्यमानेंतरा मुक्ते गुदे प्रतिहतोनिलः ॥ ४८ ॥
उरःशिरोरुजं सादमूर्वोश्च जनयेद्बली ।
बस्तिः स्यात्तत्र बिल्वादिफलैः श्यामादिमूत्रवान्॥ ४९॥
अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम् ।
तत्र बस्तिर्विरेकश्च गलपीडादि कर्म च ॥ ५० ॥
वमनाद्यैर्विशुद्धं च क्षामदेहबलानलम् ।
यथांडं तरुणं पूर्णं तैलपात्रं यथा तथा ॥ ५१ ॥
भिषक् प्रयत्नतो रक्षेत्सर्वस्मादपचारतः ।
दद्यान्मधुरहृद्यानि ततोम्ललवणौ रसौ ॥ ५२ ॥
स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ।
अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ॥ ५३ ॥
व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत् ।
सर्वसहः स्थिरबलो विज्ञेयः प्रकृतिं गतः" ॥ ५४ ॥

---

## षष्ठोऽध्यायः ।

अथाऽतो भेषजकल्पं व्याख्यास्यामः ॥
"धन्वसाधारणे देशे समे सन्मृत्तिके शुचौ ।

श्मशानचैत्यायतनश्वभ्रवल्मीकवर्जिते ॥ १ ॥
मृदौ प्रदक्षिणजले कुशरोहिषसंस्तृते ।
अफालकृष्टेऽनाक्रांते पादपैर्बलवत्तरैः ॥ २ ॥
शस्यते भेषजं जातं युक्तं वर्णरसादिभिः ।
जंत्वजग्धं दवादग्धमविदग्धं च वैकृतैः ॥ ३ ॥
भूतैश्छायातपांब्वाद्यैर्यथाकालं च सेवितम् ।
अवगाढमहामूलमुदीचीं दिशमाश्रितम् ॥ ४ ॥
अथ कल्याणचरितः श्राद्धः शुचिरुपोषितः ।
गृह्णीयादौषधं सुस्थं स्थितं काले च कल्पयेत् ॥ ५ ॥
सक्षीरं तदसंपत्तावनतिक्रांतवत्सरम् ।
ऋते गुडघृतक्षौद्रधान्यकृष्णाविडंगतः ॥ ६ ॥
पयो बाष्कयणं ग्राह्यं विण्मूत्रं तच्च नीरुजम् ।
वयोबलवतां धातुपिच्छश्रृंगखुरादिकम् ॥ ७ ॥
कषाययोनयः पंच रसा लवणवर्जिताः ।
रसः कल्कः श्रृतः शीतः फांटश्चेति प्रकल्पना ॥ ८ ॥
पंचधैवं कषायाणां पूर्वं पूर्वं बलाधिका ।
सद्यःसमुद्धृतात्क्षुण्णाद्यः स्रवेत्पटपीडितात् ॥ ९ ॥
स्वरसः स समुद्दिष्टः

कल्कः पिष्टो द्रवाप्लुतः ।

चूर्णोऽप्लुतः

श्रृतः क्वाथः

शीतो रात्रिं द्रवे स्थितः ॥ १० ॥

सद्योभिषुतपूतस्तु फांटस्तन्मानकल्पने ।
युंज्याद्व्याध्यादिबलतस्तथा च वचनं मुनेः ॥ ११ ॥
मात्राया न व्यवस्थाऽस्ति व्याधिं कोष्ठं बलं वयः ।
आलोच्य देशकालौ च योज्या तद्वच्च कल्पना ॥१२॥
मध्यं तु मानं निर्दिष्टं स्वरसस्य चतुःपलम् ।
पेष्यस्य कर्षमालोड्यं तद्द्रवस्य पलत्रये ॥ १३ ॥
क्वाथं द्रव्यपले कुर्यात्प्रस्थार्धं पादशेषितम् ।
शीतं पले पलैः षड्भिः

चतुर्भिश्च ततोऽपरम् ॥ १४ ॥
स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्धितम् ।
कल्कस्नेहद्रवं योज्यम्

अधीते शौनकः पुनः ॥ १५ ॥
स्नेहे सिद्ध्यति शुद्धांबुनिःक्वाथस्वरसैः क्रमात् ।
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ॥ १६ ॥
पृथक् स्नेहसमं दद्यात्पंचप्रभृति तु द्रवम् ।
नांगुलिग्राहिता कल्के न स्नेहेऽग्नौ सशब्दता ॥ १७ ॥
वर्णादिसंपच्च यदा तदैनं शीघ्रमाहरेत् ।
घृतस्य फेनोपशमस्तैलस्य तु तदुद्भवः ॥ १८ ॥
लेहस्य तंतुमत्ताप्सु मज्जनं शरणं न च ।

---

१ वर्तमानकाले एतन्मानस्यापि द्वित्रिचतुरंशकल्पना देशकालप्रकृत्यादिना कार्या ।

पाकस्तु त्रिविधो मंदश्चिक्कणः खरचिक्कणः ॥ १९ ॥
मंदः कल्कसमे किंचिच्चिक्कणो मदनोपमे ।
किंचित्सीदति कृष्णे च वर्तमाने च पश्चिमः ॥२०॥
दग्धोत ऊर्ध्वं निःकार्यः स्यादामस्त्वग्निसादकृत् ।
मुदुर्नस्ये खरोऽभ्यंगे पाने बस्तौ च चिक्कणः ॥ २१ ॥
शाणं पाणितलं मुष्टिः कुडवं प्रस्थमाढकम् ।
द्रोणं वहं च क्रमशो विजानीयाच्चतुर्गुणम् ॥ २२ ॥
द्विगुणं योजयेदार्द्रं कुडवादि तथा द्रवम् ।
पेषणालोडने वारि स्नेहपाके च निर्द्रवे ॥ २३ ॥
कल्पयेत्सदृशान्भागान्प्रमाणं यत्र नोदितम् ।
कल्कीकुर्याच्च भैषज्यमनिरूपितकल्पनम् ॥ २४ ॥
द्वौ शाणौ वटकः कोलं बदरं द्रंक्षणश्च तौ ।
अक्षं पिचुः पाणितलं सुवर्णं कवलग्रहः ॥ २५ ॥
कर्षो बिडालपदकं तिंदुकः पाणिमानिका ।
शब्दान्यत्वमभिन्नेऽर्थे शुक्तिरष्टमिका पिचू ॥ २६ ॥
पलं प्रकुंचो बिल्वं च मुष्टिराम्रं चतुर्थिका ।
द्वे पले प्रसृतस्तौ द्वावञ्जलिस्तौ तु मानिका ॥ २७ ॥
आढकं भाजनं कंसो द्रोणः कुंभो घटोर्मणम् ।
तुला पलशतं तानि विंशतिर्भार उच्यते ॥ २८ ॥
हिमवद्विंध्यशैलाभ्यां प्रायो व्याप्ता वसुंधरा ।
सौम्यं पथ्यं च तत्राद्यमाग्नेयं वैंध्यमौषधम् " ॥२९॥
समाप्तमिदं कल्पस्थानम् । अ० ॥ ६ ॥ श्लो० ३१२॥

---

# अष्टांगहृदये

## उत्तरस्थानम् ।

### प्रथमोऽध्यायः ।

अथाऽतो बालोपचरणीयमध्यायं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ॥

"जातमात्रं विशोध्योल्बाद्बालं सैंधवसर्पिषा ।
प्रसूतिक्लेशितं चानु बलातैलेन सेचयेत् ॥ १ ॥
अश्मनोर्वादनं चास्य कर्णमूले समाचरेत् ।
अथास्य दक्षिणे कर्णे मंत्रमुच्चारयेदिमम् ॥ २ ॥
"अंगादंगात्संभवसि हृदयादभिजायसे" ।
"आत्मा वै पुत्रनामासि स जीव शरदां शतम् " ३
"शतायुः शतवर्षोऽसि दीर्घमायुरवाप्नुहि" ।
"नक्षत्राणि दिशो रात्रिरहश्च त्वाभिरक्षतु" ॥ ४ ॥
स्वस्थीभूतस्य नाभिं च सूत्रेण चतुरंगुलात् ।
बद्ध्वोर्ध्वं वर्धयित्वा च ग्रीवायामवसंजयेत् ॥ ५ ॥
नाभिं च कुष्ठतैलेन सेचयेत्स्नपयेदनु ।
क्षीरिवृक्षकषायेण सर्वगंधोदकेन वा ॥ ६ ॥
कोष्णेन तप्तरजततपनीयनिमज्जनैः ।
ततो दक्षिणतर्जन्या तालून्नम्यावगुंठयेत् ॥ ७ ॥
शिरसि स्नेहपिचुना प्राश्यं चास्य प्रयोजयेत् ।
हरेणुमात्रं मेधायुर्बलार्थमभिमंत्रितम् ॥ ८ ॥

ऐंद्रीब्राह्मीवचाशंखपुष्पीकल्कं घृतं मधु ।
चामीकरवचाब्राह्मीताप्यपथ्या रजीकृताः ॥ ९ ॥
लिह्यान्मधुघृतोपेता हेमधात्रीरजोऽथवा ।
गर्भांभः सैंधववता सर्पिषा वामयेत्ततः ॥ १० ॥
प्राजापत्येन विधिना जातकर्माणि कारयेत् ।
सिराणां हृदयस्थानां विवृतत्वात्प्रसूतितः ॥ ११ ॥
तृतीयेऽह्नि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्तते ।
प्रथमे दिवसे तस्मात्त्रिकालं मधुसर्पिषी ॥ १२ ॥
अनंतामिश्रिते मंत्रपाविते प्राशयेच्छिशुम् ।
द्वितीये लक्ष्मणासिद्धं तृतीये च घृतं ततः ॥ १३ ॥
प्राङ्निषिद्धस्तनस्यास्य तत्पाणितलसंमितम् ।
स्तन्यानुपानं द्वौ कालौ नवनीतं प्रयोजयेत् ॥ १४ ॥
मातुरेव पिबेत्स्तन्यं तत्परं देहवृद्धये ।
स्तन्यधात्र्यावुभे कार्ये तदसंपदि वत्सले ॥ १५ ॥
अव्यंगे ब्रह्मचारिण्यौ वर्णप्रकृतितः समे ।
नीरुजे मध्यवयसौ जीवद्वत्से न लोलुपे ॥ १६ ॥
हिताहारविहारेण यत्नादुपचरेच्च ते ।
शुक्क्रोधलंघनायासाः स्तन्यनाशस्य हेतवः ॥ १७ ॥
स्तन्यस्य सीधुवर्ज्यानि मद्यान्यानूपजा रसाः ।
क्षीरं क्षीरिण्य ओषध्यः शोकादेश्च विपर्ययः ॥ १८ ॥
विरुद्धाहारभुक्ताया क्षुधिताया विचेतसः ।

प्रदुष्टधातोर्गर्भिण्याः स्तन्यं रोगकरं शिशोः ॥ १९ ॥
स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ।
ह्रस्वेन पंचमूलेन स्थिरया वा सितायुतम् ॥ २० ॥
षष्ठीं निशां विशेषेण कृतरक्षाबलिक्रियाः ।
जागृयुर्बांधवास्तस्य दधतः परमां मुदम् ॥ २१ ॥
दशमे दिवसे पूर्णे विधिभिः स्वकुलोचितैः ।
कारयेत्सूतिकोत्थानं नाम बालस्य चार्चितम् ॥ २२ ॥
बिभ्रतोऽगैर्मनोह्वालरोचनागुरुचंदनम् ।
नक्षत्रदेवतायुक्तं बांधवं वा समाक्षरम् ॥ २३ ॥
ततःप्रकृतिभेदोक्तरूपैरायुःपरीक्षणम् ।
प्रागुदक्शिरसः कुर्यात् बालस्य ज्ञानवान् भिषक्॥२४॥
शुचिधौतोपधानानि निर्वलीनि मृदूनि च ।
शय्यास्तरणवासांसि रक्षोघ्नैर्धूपितानि च ॥ २५ ॥
काको विशस्तः शस्तश्च धूपने त्रिवृतान्वितः ।
जीवत्खड्गादिश्रृंगोत्थान् सदा बालः शुभान् मणीन् ॥
धारयेदौषधीः श्रेष्ठा ब्राह्मयैंद्रीजीवकादिकाः ।
हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात्सततं वचाम् ॥ २७ ॥
आयुर्मेधास्मृतिस्वास्थ्यकरीं रक्षोभिरक्षिणीम् ।
पंचमे मासि पुण्येऽह्नि धरण्यामुपवेशयेत् ॥ २८ ॥
षष्ठेऽन्नप्राशनं मासि क्रमात्तत्र प्रयोजयेत् ।
षट्सप्तमाष्टमासेषु नीरुजस्य शुभेऽहनि ॥ २९ ॥

कर्णौ हिमागमे विध्येद्धात्र्यंकस्थस्य सांत्वयन् ।
प्राग्दक्षिणं कुमारस्य भिषग्वामं तु योषितः ॥ ३० ॥
दक्षिणेन दधत्सूचीं पालिमन्येन पाणिना ।
मध्यतः कर्णपीठस्य किंचिद्गंडाश्रयं प्रति ॥ ३१ ॥
जरायुमात्रप्रच्छन्ने रविरश्म्यवभासिते ।
धृतस्य निश्चलं सम्यगलक्तकरसांकिते ॥ ३२ ॥
विध्येद्दैवकृते छिद्रे सकृदेवर्जु लाघवात् ।
नोर्ध्वं न पार्श्वतो नाधः शिरास्तत्र हि संश्रिताः ॥ ३३ ॥
कालिका मर्मरी रक्ता
तद्व्यधाद्रागरुग्ज्वराः ।
सशोफदाहसंरंभमन्यास्तंभापतानकाः ॥ ३४ ॥
तेषां यथामयं कुर्याद्विभज्याशु चिकित्सितम् ।
स्थाने व्यधान्न रुधिरं न रुग्रागादिसंभवः ॥ ३५ ॥
स्नेहाक्तं सूच्यनुस्यूतं सूत्रं चानु निधापयेत् ।
आमे तैलेन सिंचेच्च बहलां तद्वदारया ॥ ३६ ॥
विध्येत्पालीं हितभुजः संचार्याथ स्थवीयसी ।
वर्तिस्त्र्यहात्ततो रूढं वर्धयेत शनैः शनैः ॥ ३७ ॥
अथैनं जातदशनं क्रमेणापनयेत्स्तनात् ।
पूर्वोक्तं योजयेत्क्षीरमन्नं च लघुबृंहणम् ॥ ३८ ॥
प्रियालमज्जमधुकमधुलाजसितोपलैः ।
अपस्तनस्य संयोज्यः प्रीणनो मोदकः शिशोः ॥ ३९ ॥

दीपनो बालबिल्वैलाशर्करालाजसक्तुभिः ।
संग्राहीधातकीपुष्पशर्करालाजतर्पणैः ॥ ४० ॥
रोगांश्चास्य जयेत्सौम्यैर्भेषजैरविषादकैः ।
अन्यत्रात्ययिकाद्व्याधेर्विरेकं सुतरां त्यजेत् ॥ ४१ ॥
त्रासयेन्नाविधेयं तं त्रस्तं गृह्णंति हि ग्रहाः ।
वस्त्रवातात्खरस्पर्शात् पालयेल्लंघिताच्च तम् ॥ ४२ ॥
ब्राह्मीसिद्धार्थकवचासारिवाकुष्ठसैंधवैः ।
सकणैः साधितं पीतं वाङ्मेधास्मृतिकृद्धृतम् ॥ ४३ ॥
आयुष्यं पाप्मरक्षोघ्नं भूतोन्मादनिबर्हणम् ।
वचेंदुलेखा मंडूकी शंखपुष्पी शतावरी ॥ ४४ ॥
ब्रह्मसोमामृताब्राह्मीः कल्कीकृत्य पलांशिकाः ।
अष्टांगं विपचेत्सर्पिःप्रस्थं क्षीरं चतुर्गुणम् ॥ ४५ ॥
तत्पीतं धन्यमायुष्यं वाङ्मेधास्मृतिबुद्धिकृत् ।
अजाक्षीराभयाव्योषपाठोग्राशिग्रुसैंधवैः ॥ ४६ ॥
सिद्धं सारस्वतं सर्पिर्वाङ्मेधास्मृतिवह्निकृत् ।
वचामृताशठीपथ्याशंखिनीवेल्लनागरैः ॥ ४७ ॥
अपामार्गेण च घृतं साधितं पूर्ववद्गुणैः ।
हेमश्वेतवचा कुष्ठमर्कपुष्पी सकांचना ॥ ४८ ॥
हेममत्स्याक्षकः शंखः कैडर्यः कनकं वचा ।
चत्वार एते पादोक्ताः प्राश्या मधुघृतप्लुताः ॥ ४९ ॥
वर्षं लीढा वपुर्मेधाबलवर्णकराः शुभाः ।

वचायष्ट्याह्वसिंधूत्थपथ्यानागरदीप्यकैः ॥ ५० ॥
शुद्ध्यते वाग्घविर्लीढैः सकुष्ठकणजीरकैः ।"

---

## द्वितीयोऽध्यायः ।

अथाऽतो बालामयप्रतिषेधं व्याख्यास्यामः ॥

"त्रिविधः कथितो बालः क्षीरान्नोभयवर्तनः ।
स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां रोगसंभवः ॥ १ ॥
यदद्भिरेकतां याति न च दोषैरधिष्ठितम् ।
तद्विशुद्धं पयः
वाताद्दुष्टं तु प्लवतेऽभसि ॥ २ ॥
कषायं फेनिलं रूक्षं वर्चोमूत्रविबंधकृत् ।
पित्ताद्दुष्टाम्लकटुकं पीतराज्यप्सु दाहकृत् ॥ ३ ॥
कफात्सलवणं सांद्रं जले मज्जति पिच्छिलम् ।
संसृष्टलिंगं संसर्गात्त्रिलिंगं सांनिपातिकम् ॥ ४ ॥
यथास्वलिंगांस्तद्व्याधीन् जनयत्युपयोजितम् ।
शिशोस्तीक्ष्णामतीक्ष्णां च रोदनाल्लक्षयेद्रुजम् ॥ ५ ॥
सोयं स्पृशेद्भृशं देशं यत्र च स्पर्शनाक्षमः ।
तत्र विद्याद्रुजं
मूर्ध्नि रुजं चाक्षिनिमीलनात् ॥ ६ ॥
हृदि जिह्वौष्ठदशनश्वासमुष्टिनिपीडितैः ।
कोष्ठे विबंधवमथुस्तनदंशांत्रकूजनैः ॥ ७ ॥
आध्मानपृष्ठनमनजठरोन्नमनैरपि ।

वस्तौ गुह्ये च विण्मूत्रसंगत्रासदिगीक्षणैः ॥ ८ ॥
अथ धाव्याः क्रियां कुर्याद्यथादोषं यथामयम् ।
तत्र वातात्मके स्तन्ये दशमूलं त्र्यहं पिबेत् ॥ ९ ॥
अथवाग्निवचापाठाकटुकाकुष्ठदीप्यकम् ।
सभार्गीदारुसरलवृश्चिकालीकणेषणम् ॥ १० ॥
ततः पिबेदन्यतमं वातव्याधिहरं घृतम् ।
अनु चाच्छसुरामेवं स्निग्धं मृदु विरेचयेत् ॥ ११ ॥
बस्तिकर्म ततः कुर्यात्स्वेदादींश्चानिलापहान् ।
रास्नाजमोदासरलदेवदारुरजोन्वितम् ॥ १२ ॥
बालो लिह्याद् घृतं तैर्वा विपक्वं ससितोपलम् ।
पित्तदुष्टेऽमृताभीरुपटोलीनिंबचंदनम् ॥ १३ ॥
धात्री कुमारश्च पिबेत् क्वाथयित्वा ससारिवम् ।
अथवा त्रिफलामुस्तभूनिंबकटुरोहिणीः ॥ १४ ॥
सारिवादिं पटोलादिं पद्मकादिं तथा गणम् ।
घृतान्येभिश्च सिद्धानि पित्तघ्नं च विरेचनम् ॥ १५ ॥
शीतांश्चाभ्यंगलेपादीन् युंज्यात्

श्लेष्मात्मके पुनः ।
यष्ट्याह्वसैंधवयुतं कुमारं पाययेद् घृतम् ॥ १६ ॥
सिंधूत्थपिप्पलीमद्वा पिष्टैः क्षौद्रयुतैरथ ।
राठपुष्पैः स्तनौ लिंपेच्छिशोश्च दशनच्छदौ ॥ १७ ॥
सुखमेवं वमेद्बालः

तीक्ष्णैर्धात्रीं तु वामयेत् ।
अथाचरितसंसर्गी मुस्तादिं कथितं पिबेत् ॥ २८ ॥
तद्वत्तगरपृथ्वीकासुरदारुकलिंगकान् ।
अथवाऽतिविषामुस्तषड्ग्रंथापंचकोलकम् ॥ १९ ॥
स्तन्ये त्रिदोषमलिने दुर्गंध्यामं जलोपमम् ।
विबद्धमच्छं विच्छिन्नं फेनिलं चोपवेश्यते ॥ २० ॥
शकृन्नानाव्यथावर्णं मूत्रं पीतं सितं घनम् ।
ज्वरारोचकतृट्छर्दिशुष्कोद्गारविजृंभिकाः ॥ २१ ॥
अंगभंगोंऽगविक्षेपः कूजनं वेपथुर्भ्रमः ।
घ्राणाक्षिमुखपाकाद्या जायंतेऽन्येऽपि तं गदम् ॥२२॥
क्षीरालसकमित्याहुरत्ययं चातिदारुणम् ।
तत्राशु धात्रीं बालं च वमनेनोपपादयेत् ॥ २३ ॥
विहितायां च संसर्ग्यां वचादिं योजयेद्गणम् ।
निशादिं वाऽथवा माद्रीपाठातिक्ताघनामयान् ॥ २४ ॥
पाठांशुंठ्यमृतातिक्ततिक्तादेवाह्वसारिवाः ।
समुस्तमूर्वेंद्रयवाः स्तन्यदोषहराः परम् ॥ २५ ॥
अनुबंधे यथाव्याधि प्रतिकुर्वीत कालवित् ।
दंतोद्भेदश्च रोगाणां सर्वेषामपि कारणम् ॥ २६ ॥
विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजाम् ।
अतिस्पंदस्य पोथक्या विसर्पस्य च जायते ॥ २७ ॥
पृष्ठभंगे बिडालानां बर्हिणां च शिखोद्गमे ।

दंतोद्भवे च बालानां नहि किंचिन्न दूयते ॥ २८ ॥
यथादोषं यथारोगं यथोद्रेकं यथाशयम् ।
विभज्य देशकालादींस्तत्र योज्यं भिषग्जितम् ॥२९॥
त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च यत् ।
अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ॥ ३० ॥
सौकुमार्याल्पकायत्वात्सर्वान्नानुपसेवनात् ।
स्निग्धा एव सदा बाला घृतक्षीरनिषेवणात् ॥ ३१ ॥
सद्यस्तान्वमनं तस्मात्पाययेन्मतिमान् मृदु ।
स्तन्यस्य तृप्तं वमयेत् क्षीरक्षीरान्नसेविनम् ॥ ३२ ॥
पीतवंतं तनुं पेयामन्नादं घृतसंयुताम् ।
बस्तिं साध्ये विरेकेण मर्शेन प्रतिमर्शनम् ॥ ३३ ॥
युंज्याद्विरेचनादींस्तु धात्र्या एव यथोदितान् ।
मूर्वाव्योषवराकोलजंबूत्वग्दारुसर्षपाः ॥ ३४ ॥
सपाठा मधुना लीढाः स्तन्यदोषहराः परम् ।
दंतपालीं समधुना चूर्णेन प्रतिसारयेत् ॥ ३५ ॥
पिप्पल्या धातकीपुष्पधात्रीफलकृतेन वा ।
लावतित्तिरवल्लूररजः पुष्परसप्लुतम् ॥ ३६ ॥
द्रुतं करोति बालानां दंतकेसरवन्मुखम् ।
वचाद्विबृहतीपाठाकटुकातिविषाघनैः ॥ ३७ ॥
मधुरैश्च घृतं सिद्धं सिद्धं दशनजन्मनि ।
रजनी दारु सरलः श्रेयसी बृहतीद्वयम् ॥ ३८ ॥

पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ।
ग्रहणीदीपनं श्रेष्ठं मारुतस्यानुलोमनम् ॥ ३९ ॥
अतीसारज्वरश्वासकामलापांडुकासनुत् ।
बालस्य सर्वरोगेषु पूजितं बलवर्णदम् ॥ ४० ॥
समंगाधातकीरोध्रकुटंनटबलाह्वयैः ।
महासहाक्षुद्रसहाक्षुद्रबिल्वशलाटुभिः ॥ ४१ ॥
सकार्पासीफलैस्तोये साधितैः साधितं घृतम् ।
क्षीरमस्तुयुतं हंति शीघ्रं दंतोद्भवोद्भवान् ॥ ४२ ॥
विविधानामयानेतद्वृद्धकश्यपनिर्मितम् ।
दंतोद्भवेषु रोगेषु न बालमतियंत्रयेत् ॥ ४३ ॥
स्वयमप्युपशाम्यंति जातदंतस्य यद्गदाः ।
अत्यहःस्वप्नशीतांबुश्लैष्मिकस्तन्यसेविनः ॥ ४४ ॥
शिशोः कफेन रुद्धेषु स्रोतःसु रसवाहिषु ।
अरोचकः प्रतिश्यायो ज्वरः कासश्च जायते ॥ ४५ ॥
कुमारः शुष्यति ततः स्निग्धशुक्लमुखेक्षणः ।
सैंधवव्योषशार्ङ्गेष्टापाठागिरिकदंबकान् ॥ ४६ ॥
शुष्यतो मधुसर्पिर्भ्यामरुच्यादिषु योजयेत् ।
अशोकरोहिणीयुक्तं पंचकोलं च चूर्णितम् ॥ ४७ ॥
बदरीधातकीधात्रीचूर्णं वा सर्पिषा द्रुतम् ।
स्थिरावचाद्विबृहतीकाकोलीपिप्पलीनतैः ॥ ४८ ॥
निचुलोत्पलवर्षाभूभार्गीमुस्तैश्च कार्षिकैः ।

सिद्धं प्रस्थार्धमाज्यस्य स्रोतसां शोधनं परम् ॥४९॥
सिंह्यश्वगंधा सुरसा कणागर्भं च तद्गुणम् ।
यष्ट्याह्वपिप्पलीरोध्रपद्मकोत्पलचंदनैः ॥ ५० ॥
तालीससारिवाभ्यां च साधितं शोपजिद्घृतम् ।
शृंगीमधूलिकाभार्गीपिप्पलीदेवदारुभिः ॥ ५१ ॥
अश्वगंधाद्विकाकोलीरास्नर्षभकजीवकैः ।
शूर्पपर्णीविडंगैश्च कल्कितैः साधितं घृतम् ॥ ५२ ॥
शशोत्तमांगनिर्यूहे शुष्यतः पुष्टिकृत्परम् ।
वचावयस्थातगरकायस्थाचोरकैः शृतम् ॥ ५३ ॥
बस्तमूत्रसुराभ्यां च तैलमभ्यंजने हितम् ।
लाक्षारससमं तैलप्रस्थं मस्तुचतुर्गुणम् ॥ ५४ ॥
अश्वगंधानिशादारुकौंतीकुष्ठाब्दचंदनैः ।
समूर्वारोहिणीरास्नाशताह्वामधुकैः समैः ॥ ५५ ॥
सिद्धं लाक्षादिकं नाम तैलमभ्यंजनादिदम् ।
बल्यं ज्वरक्षयोन्मादश्वासापस्मारवातनुत् ॥ ५६ ॥
यक्षराक्षसभूतघ्नं गर्भिणीनां च शस्यते ।
मधुनाऽतिविषाशृंगीपिप्पलीर्लेहयेच्छिशुम् ॥ ५७ ॥
एकां वातिविषां कासज्वरच्छर्दिरुपद्रुतम् ।
पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा ॥ ५८ ॥
द्विवार्ताकीफलरसं पंचकोलं च लेहयेत् ।
पिप्पली पंचलवणं कृमिजित्पारिभद्रकम् ॥ ५९ ॥

तद्वल्लिह्यात्तथा व्योषं मषीं वा रोमचर्मणाम् ।
लाभतः शल्यकश्वाविद्गोधर्क्षशिखिजन्मनाम् ॥ ६० ॥
खदिरार्जुनतालीसकुष्ठचंदनजे रसे ।
सक्षीरं साधितं सर्पिर्वमथुं विनियच्छति ॥ ६१ ॥
सदंतो जायते यस्तु दंताः प्राग्यस्य चोत्तराः ।
कुर्वीत तस्मिन्नुत्पाते शांतिकं च द्विजातये ॥ ६२ ॥
दद्यात्सदक्षिणं बालं नैगमेषं च पूजयेत् ।[1]
तालुमांसे कफः क्रुद्धः कुरुते तालुकंटकम् ॥ ६३ ॥
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ।
तालुपातः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम् ॥ ६४ ॥
तृडास्यकंड्वक्षिरुजा ग्रीवादुर्धरता वमिः ।
तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत् ॥ ६५ ॥
तालु तद्वत्कणाशुंठीगोशकृद्रससैंधवैः ।
शृंगबेरनिशाभृंगं कल्कितं वटपल्लवैः ॥ ६६ ॥
बद्ध्वा गोशकृता लिप्तं कुकूले स्वेदयेत्ततः ।
रसेन लिंपेत्तात्वास्यं नेत्रे च परिषेचयेत् ॥ ६७ ॥

१ क्षेपकावत्र ।

हनुमूलगतो वायुर्दंतदेशेस्थिगोचरः ।
यदा शिशोः प्रकुपितो नोत्तिष्ठंति तदा द्विजाः ॥ १ ॥
रूक्षाशिनो वातिकस्य चालयत्यनिलः शिराः ।
हन्वाश्रयाः प्रसुप्तस्य दंतैः शब्दं करोत्यतः ॥ २ ॥

हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् ।
पीत्वा कुमारः स्तन्येन मुच्यते तालुकंटकात् ॥ ६८ ॥
मलोपलेपात्स्वेदाद्वा गुदे रक्तकफोद्भवः ।
ताम्रो व्रणोंऽतःकंडूमान् जायते भूर्युपद्रवः ॥ ६९ ॥
केचित्तं मातृकादोषं वदंत्यन्येऽपि पूतनम् ।
प्रष्टारुर्गुदकुंदं च केचिच्च तमनामिकम् ॥ ७० ॥
तत्र धात्र्याः पयः शोध्यं पित्तश्लेष्महरौषधैः ।
शृतशीतं च शीतांबुयुक्तमंतरपानकम् ॥ ७१ ॥
सक्षौद्रतार्क्ष्यशैलेन व्रणं तेन च लेपयेत् ।
त्रिफलाबदरीप्लक्षत्वक्क्वाथपरिषेचितम् ॥ ७२ ॥
कासीसरोचनातुत्थमनोह्वालरसांजनैः ।
लेपयेदम्लपिष्टैर्वा चूर्णितैर्वावचूर्णयेत् ॥ ७३ ॥
सुश्लक्ष्णैरथवा यष्टीशंखसौवीरकांजनैः ।
सारिवाशंखनाभिभ्यामसनस्य त्वचाऽथवा ॥ ७४ ॥
रागकंडूत्कटे कुर्याद्रक्तस्रावं जलौकसा ।
सर्वं च पित्तव्रणजिच्छस्यते गुदकुट्टके ॥ ७५ ॥
पाठावेल्लद्विरजनीमुस्तभार्गीपुनर्नवैः ।
सबिल्वत्र्यूषणैः सर्पिर्वृश्चिकालीयुतैः शृतम् ॥ ७६ ॥
लिहानो मात्रया रोगैर्मुच्यते मृत्तिकोद्भवैः ।
व्याधेर्यद्यस्य भैषज्यं स्तनस्तेन प्रलेपितः ।
स्थितो मुहूर्तं धौतोनु पीतस्तं तं जयेद्गदम्" ॥७७॥

---

## तृतीयोऽध्यायः ।

अथाऽतो बालग्रहप्रतिषेधं व्याख्यास्यामः ॥

"पुरा गुहस्य रक्षार्थं निर्मिताः शूलपाणिना ।
मनुष्यविग्रहाः पंच सप्त स्त्रीविग्रहा ग्रहाः ॥ १ ॥
स्कंदो विशाखो मेषाख्यः श्वग्रहः पितृसंज्ञितः ।
शकुनिः पूतना शीतपूतना दृष्टिपूतना ॥ २ ॥
मुखमंडलिका तद्वद्रेवती शुष्करेवती ।
तेषां ग्रहीष्यतां रूपं प्रततं रोदनं ज्वरः ॥ ३ ॥
सामान्यं रूपमुत्त्रासजृंभाभ्रूक्षेपदीनताः ।
फेनस्रावोर्ध्वदृष्ट्योष्ठदंतदंशप्रजागराः ॥ ४ ॥
रोदनं कूजनं स्तन्यविद्वेषः स्वरवैकृतम् ।
नखैरकस्मात्परितः स्वधात्र्यंगविलेखनम् ॥ ५ ॥
तत्रैकनयनस्रावी शिरोविक्षिपते मुहुः ।
हतैकपक्षः स्तब्धांगः सस्वेदो नतकंधरः ॥ ६ ॥
दंतखादी स्तनद्वेषी त्रस्यन् रोदिति विस्वरः ।
वक्रवक्त्रो वमेल्लालां भृशमूर्ध्वं निरीक्षते ॥ ७ ॥
वसासृग्गंधिरुद्विग्नो बद्धमुष्टिशकृच्छिशुः ।
चलितैकाक्षिगंडभ्रूः संरक्तोभयलोचनः ॥ ८ ॥
स्कंदार्तस्तेन वैकल्यं मरणं वा भवेद्ध्रुवम् ।
संज्ञानाशो मुहुः केशलुंचनं कंधरानतिः ॥ ९ ॥
विनम्य जृंभमाणस्य शकृन्मूत्रप्रवर्तनम् ।

फेनोद्वमनमूर्ध्वेक्षा हस्तभ्रूपादनर्तनम् ॥ १० ॥
स्तनस्वजिह्वासंदंशसंरंभज्वरजागराः ।
पूयशोणितगंधश्च स्कंदापस्मारलक्षणम् ॥ ११ ॥
आध्मानं पाणिपादास्यस्पंदनं फेननिर्वमः ।
तृण्मुष्टिबंधातीसारस्वरदैन्यविवर्णताः ॥ १२ ॥
कूजनं स्तननं छर्दिः कासहिध्माप्रजागराः ।
ओष्ठदंशांगसंकोचस्तंभबस्तामगंधताः ॥ १३ ॥
ऊर्ध्वं निरीक्ष्य हसनं मध्ये विनमनं ज्वरः ।
मूर्छैकनेत्रशोफश्च नैगमेषग्रहाकृतिः ॥ १४ ॥
कंपो हृषितरोमत्वं स्वेदश्चक्षुर्निमीलनम् ।
वहिरायामनं जिह्वादंशोऽतः कंठकूजनम् ॥ १५ ॥
धावनं विट्सगंधत्वं क्रोशनं श्वानवच्छुनि ।
रोमहर्षो मुहुस्त्रासः सहसा रोदनं ज्वरः ॥ १६ ॥
कासातीसारवमथुजृंभातृट्शवगंधताः ।
अंगेष्वाक्षेपविक्षेपः शोषस्तंभविवर्णताः ॥ १७ ॥
मुष्टिबंधः स्रुतिश्चाक्ष्णोर्बालस्य स्युः पितृग्रहे ।
स्रस्तांगत्वमतीसारो जिह्वातालुगले व्रणाः ॥ १८ ॥
स्फोटाः सदाहरुक्पाकाः संधिषु स्युः पुनः पुनः ।
निश्यह्नि प्रविलीयंते पाको वक्त्रे गुदेऽपि वा ॥१९॥
भयं शकुनिगंधत्वं ज्वरश्च शकुनिग्रहे ।
पूतनायां वमिः कंपस्तंद्रा रात्रौ प्रजागरः ॥ २० ॥

हिध्माध्मानं शकृद्भेदः पिपासा मूत्रनिग्रहः ।
स्रस्तहृष्टांगरोमत्वं काकवत्पूतिगंधता ॥ २१ ॥
शीतपूतनया कंपो रोदनं तिर्यगीक्षणम् ।
तृष्णांत्रकूजोऽतीसारो वसावद्विस्रगंधता ॥ २२ ॥
पार्श्वस्यैकस्य शीतत्वमुष्णत्वमपरस्य च ।
अंधपूतनया छर्दिर्ज्वरः कासोऽल्पवह्निता ॥ २३ ॥
वर्चसो भेदवैवर्ण्यदौर्गंध्यान्यंगशोषणम् ।
दृष्टिसादोऽतिरुक्कंडूपोथकीजन्मशून्यताः ॥ २४ ॥
हिध्मोद्वेगस्तनद्वेषवैवर्ण्यं स्वरतीक्ष्णता ।
वेपथुर्मत्स्यगंधित्वमथवा साम्लगंधिता ॥ २५ ॥
मुखमंडितया पाणिपादस्य रमणीयता ।
सिराभिरसिताभाभिराचितोदरता ज्वरः ॥ २६ ॥
अरोचकोऽगग्लपनं गोमूत्रसमगंधता ।
रेवत्यां श्यावनीलत्वं कर्णनासाक्षिमर्दनम् ॥ २७ ॥
कासहिध्माक्षिविक्षेपवक्रवक्त्रत्वरक्तताः ।
बस्तगंधो ज्वरः शोषः पुरीषं हरितं द्रवम् ॥ २८ ॥
जायते शुष्करेवत्यां क्रमात्सर्वांगसंक्षयः ।
केशशातोऽन्नविद्वेषः स्वरदैन्यं विवर्णता ॥ २९ ॥
रोदनं गृध्रगंधित्वं दीर्घकालानुवर्तनम् ।
उदरे ग्रंथयो वृत्ता यस्य नानाविधं शकृत् ॥ ३० ॥
जिह्वाया निम्नता मध्ये श्यावं तालु च तं त्यजेत् ।

भुंजानोऽन्नं बहुविधं यो बालः परिहीयते ॥ ३१ ॥
तृष्णागृहीतक्षामाक्षो हंति तं शुष्करेवती ।
हिंसारत्यर्चनाकांक्षा ग्रहग्रहणकारणम् ॥ ३२ ॥
तत्र हिंसात्मके बालो महान् वा स्रुतनासिकः ।
क्षतजिह्वः क्वणेद् बाढमसुखी साश्रुलोचनः ॥ ३३ ॥
दुर्वर्णो हीनवचनः पूतिगंधिश्च जायते ।
क्षामो मूत्रपुरीषं स्वं मृद्गाति न जुगुप्सते ॥ ३४ ॥
हस्तौ चोद्यम्य संरब्धो हंत्यात्मानं तथा परम् ।
तद्वच्च शस्त्रकाष्ठाद्यैरग्निं वा दीप्तमाविशेत् ॥ ३५ ॥
अप्सु मज्जेत्पतेत्कूपे कुर्यादन्यच्च तद्विधम् ।
तृड्दाहमोहान् पूयस्य छर्दनं च प्रवर्तयेत् ॥ ३६ ॥
रक्तं च सर्वमार्गेभ्यो रिष्टोत्पत्तिश्च तं त्यजेत् ।
रहःस्त्रीरतिसंलापगंधस्रग्भूषणप्रियः ॥ ३७ ॥
हृष्टः शांतश्च दुःसाध्यो रतिकामेन पीडितः ।
दीनः परिमृशेद्वक्त्रं शुष्कोष्ठगलतालुकः ॥ ३८ ॥
शंकितं वीक्षते रौति ध्यायत्यायाति दीनताम् ।
अन्नमन्नाभिलाषेऽपि दत्तं नात्ति बुभुक्षते ॥ ३९ ॥
गृहीतं बलिकामेन तं विद्यात्सुखसाधनम् ।
हंतुकामं जयेद्धोमैः सिद्धमंत्रप्रवर्तितैः ॥ ४० ॥
इतरौ तु यथाकामं रतिबल्यादिदानतः ।
अथ साध्यग्रहं बालं विविक्ते शरणे स्थितम् ॥ ४१ ॥

त्रिरह्नः सिक्तसंसृष्टे सदा संनिहितानले।
विकीर्णभूतिकुसुमपत्रबीजान्नसर्षपे ॥ ४२ ॥
रक्षोघ्नतैलज्वलितप्रदीपहतपाप्मनि।
व्यवायमद्यपिशितनिवृत्तपरिचारके ॥ ४३ ॥
पुराणसर्पिषाभ्यक्तं परिषिक्तं सुखांबुना।
साधितेन बलानिंबवैजयंतीनृपद्रुमैः ॥ ४४ ॥
पारिभद्रककद्वंगजंबूवरुणकट्टतृणैः।
कपोतवंकापामार्गपाटलामधुशिग्रुभिः ॥ ४५ ॥
काकजंघामहाश्वेताकपित्थक्षीरपादपैः।
सकदंबकरंजैश्च धूपं स्नातस्य चाचरेत् ॥ ४६ ॥
द्वीपिव्याघ्राहिसिंहर्क्षचर्मभिर्घृतमिश्रितैः।
पूतीदशांगीसिद्धार्थवचाभल्लातदीप्यकैः ॥ ४७ ॥
सकुष्ठैः सघृतैर्धूपः सर्वग्रहविमोक्षणः।
वचाहिंगुविडंगानि सैंधवं गजपिप्पली ॥ ४८ ॥
पाठा प्रतिविषा व्योषं दशांगः कश्यपोदितः।
सर्षपा निंबपत्राणि मूलमश्वखुरा वचा ॥ ४९ ॥
भूर्जपत्रं घृतं धूपः सर्वग्रहनिवारणः।
अनंताम्रास्थितगरं मरिचं मधुरो गणः ॥ ५० ॥
शृगालविन्ना मुस्ता च कल्कितैस्तैर्घृतं पचेत्।
दशमूलरसक्षीरं युक्तं तद्ग्रहजित्परम् ॥ ५१ ॥
रास्नाध्वंशुमतीवृद्धपंचमूलवचाघनात्।

क्वाथे सर्पिः पचेत्पिष्टैः सारिवाव्योपचित्रकैः ॥ ५२ ॥
पाठाविडंगमधुकपयस्याहिंगुदारुभिः ।
सग्रंथिकैः सेंद्रयवैः शिशोस्तत्सततं हितम् ॥ ५३ ॥
सर्वरोगग्रहहरं दीपनं बलवर्णदम् ।
सारिवासुरभीब्राह्मीशंखिनीकृष्णसर्षपैः ॥ ५४ ॥
वचाश्वगंधासुरसायुक्तैः सर्पिर्विपाचयेत् ।
तन्नाशयेद्ग्रहान्सर्वान्पानेनाभ्यंजनेन च ॥ ५५ ॥
गोशृंगलोमबालाहिनिर्मोकवृषदंशविट् ।
निंबपत्राज्यकटुका मदनं बृहतीद्वयम् ॥ ५६ ॥
कार्पासास्थियवच्छागरोमदेवाह्वसर्षपम् ।
मयूरपत्रश्रीवासं तुषकेशं सरामठम् ॥ ५७ ॥
मृद्भांडे बस्तमूत्रेण भावितं श्लक्ष्णचूर्णितम् ।
धूपनार्थं हितं सर्वं भूतेषु विषमे ज्वरे ॥ ५८ ॥
घृतानि भूतविद्यायां वक्ष्यंते यानि तानि च ।
युंज्यात्तथा बलिं होमं स्नपनं मंत्रतंत्रवित् ॥ ५९ ॥
पूतीकरंजत्वक्पत्रं क्षीरिभ्यो बर्बरादपि ।
तुंबीविशालारलुकाशमीबिल्वकपित्थकाः ॥ ६० ॥
उत्क्वाथ्य तोयं तद्रात्रौ बालानां स्नपनं शिवम् ।
अनुबंधान्यथाकृच्छ्रं ग्रहापायेप्युपद्रवान् ।
बालामयनिषेधोक्तभेषजैः समुपाचरेत्'' ॥ ६१ ॥
इत्यष्टांगहृदये कौमारतंत्रं द्वितीयं समाप्तम् ।

---

## चतुर्थोऽध्यायः ।

अथाऽतो भूतविज्ञानं व्याख्यास्यामः ॥
"लक्षयेज्ज्ञानविज्ञानवाक्चेष्टाबलपौरुषम् ।
पुरुषेऽपौरुषं यत्र तत्र भूतग्रहं वदेत् ॥ १ ॥
भूतस्य रूपप्रकृतिभाषागत्यादिचेष्टितैः ।
यस्यानुकारं कुरुते तेनाविष्टं तमादिशेत् ॥ २ ॥
सोऽष्टादशविधो देवदानवादिविभेदतः ।
हेतुस्तदनुषक्तौ तु सद्यः पूर्वकृतोऽथवा ॥ ३ ॥
प्रज्ञापराधः सुतरां तेन कामादिजन्मना ।
लुप्तधर्मव्रताचारः पूज्यानप्यतिवर्तते ॥ ४ ॥
तं तथा भिन्नमर्यादं पापमात्मोपघातिनम् ।
देवादयोप्यनुघ्नंति ग्रहाश्छिद्रप्रहारिणः ॥ ५ ॥
छिद्रं पापक्रियारंभः पाकोऽनिष्टस्य कर्मणः ।
एकस्य शून्येऽवस्थानं श्मशानादिषु वा निशि ॥ ६ ॥
दिग्वासस्त्वं गुरोर्निंदा रतेरविधिसेवनम् ।
अशुचेर्देवतार्चादिपरसूतकसंकरः ॥ ७ ॥
होममंत्रबलीज्यानां विगुणं परिकर्म च ।
समासाह्निनचर्यादिप्रोक्ताचारव्यतिक्रमः ॥ ८ ॥
गृह्णंति शुक्लप्रतिपत्त्रयोदश्योः सुरा नरम् ।
शुक्लत्रयोदशीकृष्णद्वादश्योर्दानवा ग्रहाः ॥ ९ ॥
गंधर्वास्तु चतुर्दश्यां द्वादश्यां चोरगाः पुनः ।

पंचम्यां शुक्लसप्तम्येकादश्योस्तु धनेश्वराः ॥ १० ॥
शुक्लाष्टपंचमीपूर्णमासीषु ब्रह्मराक्षसाः ।
कृष्णे रक्षःपिशाचाद्या नवद्वादशपर्वसु ॥ ११ ॥
दशामावास्ययोरष्टनवम्योः पितरोऽपरे ।
गुरुवृद्धादयः प्रायः कालं संध्यासु लक्षयेत् ॥ १२ ॥
फुल्लपद्मोपममुखं सौम्यदृष्टिमकोपनम् ।
अल्पवाक्स्वेदविण्मूत्रं भोजनानभिलाषिणम् ॥१३॥
देवद्विजातिपरमं शुचिसंस्कृतवादिनम् ।
मीलयंतं चिरान्नेत्रे सुरभिं वरदायिनम् ॥ १४ ॥
शुक्लमाल्यांबरसरिच्छैलोच्चभवनप्रियम् ।
अनिद्रमप्रधृष्यं च विद्याद्देववशीकृतम् ॥ १५ ॥
जिह्मदृष्टिं दुरात्मानं गुरुदेवद्विजद्विषम् ।
निर्भयं मानिनं शूरं क्रोधनं व्यवसायिनम् ॥ १६ ॥
रुद्रः स्कंदो विशाखोऽहमिंद्रोऽहमिति वादिनम् ।
सुरामांसरुचिं विद्याद् दैत्यग्रहगृहीतकम् ॥ १७ ॥
स्वाचारं सुरभिं हृष्टं गीतनर्तनकारिणम् ।
स्नानोद्यानरुचिं रक्तवस्त्रमाल्यानुलेपनम् ॥ १८ ॥
शृंगारलीलाभिरतं गंधर्वाध्युषितं वदेत् ।
रक्ताक्षं क्रोधनं स्तब्धदृष्टिं वक्रगतिं चलम् ॥ १९ ॥
श्वसंतमनिशं जिह्वालालिनं सृक्किणीलिहम् ।
प्रियदुग्धगुडस्नानमधोवदनशायिनम् ॥ २० ॥

उरगाधिष्ठितं विद्यात्रस्यंतं चातपत्रतः ।
विप्लुतं त्रस्तरक्ताक्षं शुभगंधं सुतेजसम् ॥ २१ ॥
प्रियनृत्यकथागीतस्नानमाल्यानुलेपनम् ।
मत्स्यमांसरुचिं हृष्टं तुष्टं बलिनमव्ययम् ॥ २२ ॥
चलिताग्रकरं कस्मै किं ददामीति वादिनम् ।
रहस्यभाषिणं वैद्यद्विजातिपरिभाविनम् ॥ २३ ॥
अल्परोषं हृतगतिं विद्याद्यक्षगृहीतकम् ।
हास्यनृत्यप्रियं रौद्रचेष्टं छिद्रप्रहारिणम् ॥ २४ ॥
आक्रोशिनं शीघ्रगतिं देवद्विजभिषग्द्विषम् ।
आत्मानं काष्ठशस्त्राद्यैर्घ्नंतं भोः शब्दवादिनम् ॥ २५ ॥
शास्त्रवेदपठं विद्याद् गृहीतं ब्रह्मराक्षसैः ।
सक्रोधदृष्टिं भ्रूकुटिमुद्वहंतं ससंभ्रमम् ॥ २६ ॥
प्रहरंतं प्रधावंतं शब्दंतं भैरवाननम् ।
अन्नाद्विनापि बलिनं नष्टनिद्रं निशाचरम् ॥ २७ ॥
निर्लज्जमशुचिं शूरं क्रूरं परुषभाषिणम् ।
रोषणं रक्तमाल्यस्त्रीरक्तमद्यामिषप्रियम् ॥ २८ ॥
दृष्ट्वा च रक्तं मांसं वा लिहानं दशनच्छदौ ।
हसंतमन्नकाले च राक्षसाधिष्ठितं वदेत् ॥ २९ ॥
अस्वस्थचित्तं नैकत्र तिष्ठंतं परिधाविनम् ।
उच्छिष्टनृत्यगांधर्वहासमद्यामिषप्रियम् ॥ ३० ॥
निर्भर्त्सनाद्दीनमुखं रुदंतमनिमित्ततः ।

नखैर्लिखंतमात्मानं रूक्षध्वस्तवपुःस्वरम् ॥ ३१ ॥
आवेदयंतं दुःखानि संबद्धाबद्धभाषिणम् ।
नष्टस्मृतिं शून्यरतिं लोलं नग्नं मलीमसम् ॥ ३२ ॥
रथ्याचैलपरीधानं तृणमालाविभूषणम् ।
आरोहंतं च काष्ठाश्वं तथा संकरकूटकम् ॥ ३३ ॥
बह्वाशिनं पिशाचेन विजानीयादधिष्ठितम् ।
प्रेताकृतिक्रियागंधं भीतमाहारविद्विषम् ॥ ३४ ॥
तृणच्छिदं च प्रेतेन गृहीतं नरमादिशेत् ।
बहुप्रलापं कृष्णास्यं प्रविलंबितयायिनम् ॥ ३५ ॥
शूनप्रलंबवृषणं कूष्मांडाधिष्ठितं वदेत् ।
गृहीत्वा काष्ठलोष्टादि भ्रमंतं चीरवाससम् ॥ ३६ ॥
नग्नं धावंतमुत्रस्तदृष्टिं तृणविभूषणम् ।
श्मशानशून्यायतनं रथ्यैकद्रुमसेविनम् ॥ ३७ ॥
तिलान्नमद्यमांसेषु सततं सक्तलोचनम् ।
निषादाधिष्ठितं विद्याद् वदंतं परुषाणि च ॥ ३८ ॥
याचंतमुदकं चान्नं त्रस्तालोहितलोचनम् ।
उग्रवाक्यं च जानीयान्नरमौकिरणार्दितम् ॥ ३९ ॥
गंधमाल्यरतिं सत्यवादिनं परिवेपिनम् ।
बहुच्छिद्रं च जानीयाद्वेतालेन वशीकृतम् ॥ ४० ॥
अप्रसन्नदृशं दीनवदनं शुष्कतालुकम् ।
चलन्नयनपक्ष्माणं निद्रालुं मंदपावकम् ॥ ४१ ॥

अपसव्यपरीधानं तिलमांसगुडप्रियम् ।
स्खलद्वाचं च जानीयात् पितृग्रहवशीकृतम् ॥ ४२ ॥
गुरुवृद्धर्षिसिद्धाभिशापचिंतानुरूपतः ।
व्याहाराहारचेष्टाभिर्यथास्वं तद्ग्रहं वदेत् ॥ ४३ ॥
कुमारवृंदानुगतं नग्नमुद्धतमूर्धजम् ।
अस्वस्थमनसं दैर्घ्यकालिकं तं ग्रहं त्यजेत् " ४४ ॥

---

## पंचमोऽध्यायः ।

अथाऽतो भूतप्रतिषेधं व्याख्यास्यामः ।
"भूतं जयेदहिंसेच्छं जपहोमबलिव्रतैः ।
तपःशीलसमाधानज्ञानदानदयादिभिः ॥ १ ॥
हिंगुव्योषालनेपालीलशुनार्कजटाजटाः ।
अजलोमी सगोलोमी भूतकेशी वचा लता ॥ २ ॥
कुक्कुटी सर्पगंधाख्या तिलाः कालविषाणिके ।
वज्रप्रोक्ता वयस्था च शृंगी मोहनवल्यपि ॥ ३ ॥
स्रोतोजांजनरक्षोघ्नं रक्षोघ्नं चान्यदौषधम् ।
खराश्वश्वाविदुष्ट्रर्क्षगोधानकुलशल्यकान् ॥ ४ ॥
द्वीपिमार्जारगोसिंहव्याघ्रसामुद्रसत्वतः ।
चर्मपित्तद्विजनखा वर्गेऽस्मिन् साधयेद्घृतम् ॥ ५ ॥
पुराणमथवा तैलं नवं तत्पाननस्ययोः ।
अभ्यंगे च प्रयोक्तव्यमेषां चूर्णं च धूपने ॥ ६ ॥

एभिश्च गुटिकां युंज्यादंजने सावपीडने ।
प्रलेपे कल्कमेतेषां क्वाथं च परिषेचने ॥ ७ ॥
प्रयोगोऽयं ग्रहोन्मादान्सापस्माराञ्छमं नयेत् ।
गजाह्वापिप्पलीमूलव्योषामलकसर्षपान् ॥ ८ ॥
गोधानकुलमार्जारझषपित्तप्रपेषितान् ।
नावनाभ्यंगसेकेषु विदधीत ग्रहापहान् ॥ ९ ॥
सिद्धार्थकं वचा हिंगु प्रियंगुरजनीद्वयम् ।
मंजिष्ठा श्वेतकटभी वचा श्वेताद्रिकर्णिका ॥ १० ॥
निंबस्य पत्रं बीजं तु नक्तमालशिरीषयोः ।
सुराह्वं त्र्यूषणं सर्पिर्गोमूत्रे तैश्चतुर्गुणे ॥ ११ ॥
सिद्धं सिद्धार्थकं नाम पाने नस्ये च योजितम् ।
ग्रहान्सर्वान्निहंत्याशु विशेषादासुरान् ग्रहान् ॥ १२ ॥
कृत्यालक्ष्मीविषोन्मादज्वरापस्मारपाप्म च ।
एभिरेवौषधैर्बस्तवारिणा कल्पितोऽगदः ॥ १३ ॥
पाननस्यांजनालेपस्नानोद्धर्षणयोजितः ।
गुणैः पूर्ववदुद्दिष्टो राजद्वारे च सिद्धिकृत् ॥ १४ ॥

सिद्धार्थकव्योषवचाश्वगंधा
निशाद्वयं हिंगुपलांडुकंदम् ।
बीजं करंजात्कुसुमं शिरीषात्
फलं च वल्कश्च कपित्थवृक्षात् ॥ १५ ॥
समाणिमंथं सनतं सकुष्ठं
स्योनाकमूलं किणिही सिता च ।

बस्तस्य मूत्रेण विभावितं तत्
पित्तेन गव्येन गुडान् विदध्यात् ॥ १६ ॥
दुष्टव्रणोन्मादतमोनिशांधा-
नुद्बद्धकान् वारिनिमग्नदेहान् ।
दिग्धाहतान् दर्पितसर्पदष्टां-
स्ते साधयंत्यंजननस्यलेपैः ॥ १७ ॥
कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिंडीतक-
त्वङ्मांसीवृकदंशविट्तुषवचाकेशाहिनिर्मोचनैः ।
नागेंद्रद्विजशृंगहिंगुमरिचैस्तुल्यैः कृतं धूपनं
स्कंदोन्मादपिशाचराक्षससुरावेशज्वरघ्नं परम् ॥ १८ ॥
त्रिकटुकदलकुंकुमग्रंथिकक्षारसिंही-
निशादारुसिद्धार्थयुग्मांबुशक्राह्वयैः
सितलशुनफलत्रयोशीरतिक्तावचा-
तुत्थयष्टीबलालोहितैलाशिलापद्मकैः ।
दधितगरमधूकसारप्रियाह्वाविषाख्या-
विषातार्क्ष्यशैलैः सचव्यामयैः
कल्कितैर्घृतमनवमशेषमूत्रांशसिद्धं मतं
भूतरावाह्वयं पानतस्तद् ग्रहघ्नं परम् ॥ १९ ॥
नतमधुकरंजलाक्षापटोलीसमंगावचा-
पाटलीहिंगुसिद्धार्थसिंहीनिशायुगलतारोहिणी-
बदरकटुफलत्रिकाकांडदारुक्रमिघ्नाजगंधा-

मरांकोल्लकोशातकीशिग्रुनिंबांबुदेंद्राह्वयैः ।
गदशुकतरुपुष्पबीजोग्रयष्ट्यद्रिकर्णीनिकुंभा-
ग्निबिल्वैः समैः कल्कितैर्मूत्रवर्गेण सिद्धं घृतम्
विधिविनिहितमाशु सर्वैः क्रमैर्योजितं हंति
सर्वग्रहोन्मादकुष्ठज्वरांस्तन्महाभूतरावं स्मृतम् ॥२०॥
ग्रहा गृह्णंति ये येषु तेषां तेषु विशेषतः ।
दिनेषु बलिहोमादीन्प्रयुंजीत चिकित्सकः ॥ २१ ॥
स्नानवस्त्रवसामांसमद्यक्षीरगुडादि च ।
रोचते यद्यदा येभ्यस्तत्तेषामाहरेत्तदा ॥ २२ ॥
रत्नानि गंधमाल्यानि बीजानि मधुसर्पिषी ।
भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरित्ययम् ॥ २३॥
सुरर्षिगुरुवृद्धेभ्यः सिद्धेभ्यश्च सुरालये ।
दिश्युत्तरस्यां तत्राऽपि देवायोपहरेद्बलिम् ॥ २४ ॥
पश्चिमायां यथाकालं दैत्यभूताय चत्वरे ।
गंधर्वाय गवां मार्गे सवस्त्राभरणं बलिम् ॥ २५ ॥
पितृनागग्रहे नद्यां नागेभ्यः पूर्वदक्षिणे ।
यक्षाय यक्षायतने सरितोर्वा समागमे ॥ २६ ॥
चतुष्पथे राक्षसाय भीमेषु गहनेषु च ।
रक्षसां दक्षिणस्यां तु पूर्वस्यां ब्रह्मरक्षसाम् ॥ २७ ॥
शून्यालये पिशाचाय पश्चिमां दिशमास्थिते ।
शुचिशुक्लानि माल्यानि गंधाः क्षैरेयमोदनम् ॥ २८ ॥

दधि छत्रं च धवलं देवानां बलिरिष्यते ।
हिंगुसर्षपषड्ग्रंथाव्योषैरर्धपलोन्मितैः ॥ २९ ॥
चतुर्गुणे गवां मूत्रे घृतप्रस्थं विपाचयेत् ।
तत्पाननावनाभ्यंगैर्देवग्रहविमोक्षणम् ॥ ३० ॥
नस्यांजनं वचाहिंगुलशुनं बस्तवारिणा ।
दैत्ये बलिर्बहुफलः सोशीरकमलोत्पलः ॥ ३१ ॥
नागानां सुमनोलाजगुडापूपगुडौदनैः ।
परमान्नमधुक्षीरकृष्णमृन्नागकेसरैः ॥ ३२ ॥
वचापद्मपुरोशीररक्तोत्पलदलैर्बलिः ।
श्वेतपत्रं च रोध्रं च तगरं नागसर्षपाः ॥ ३३ ॥
शीतेन वारिणा पिष्टं नावनांजनयोर्हितम् ।
यक्षाणां क्षीरदध्याज्यमिश्रकोदनगुग्गुलुः ॥ ३४ ॥
देवदारूत्पलं पद्मसुशीरं वस्त्रकांचनम् ।
हिरण्यं च बलिर्योज्यो

मूत्राज्यक्षीरमेकतः ॥ ३५ ॥
सिद्धं समोन्मितं पाननावनाभ्यंजने हितम् ।
हरीतकी हरिद्रे द्वे लशुनो मरिचं वचा ॥ ३६ ॥
निंबपत्रं च बस्तांबुकल्कितं नावनांजनम् ।
ब्रह्मरक्षोबलिः सिद्धं यवानां पूर्णमाढकम् ॥ ३७ ॥
तोयस्य कुंभः पललं छत्रं वस्त्रं विलेपनम् ।
गायत्रीविंशतिपलक्वाथेऽर्धपलिकैः पचेत् ॥ ३८ ॥

व्यूषणत्रिफलाहिंगुषड्ग्रंथामिशिसर्षपैः ।
सनिंबपत्रलशुनैः कुडवान्सप्त सर्पिषः ॥ ३९ ॥
गोमूत्रे त्रिगुणे पाने नस्याभ्यंगेषु तद्धितम् ।
रक्षसां पललं शुक्तं कुसुमं मिश्रकौदनम् ॥ ४० ॥
बलिः पक्कामममांसानि निष्पावा रुधिरोक्षिताः ।
नक्तमालशिरीषत्वङ्मूलपुष्पफलानि च ॥ ४१ ॥
तद्वच्च कृष्णपाटल्या बिल्वमूलं कटुत्रिकम् ।
हिंग्विद्वयवसिद्धार्थलशुनामलकीफलम् ॥ ४२ ॥
नावनांजनयोर्योज्यो बस्तमूत्रहृतो गदः ।
एभिरेव घृतं सिद्धं गवां मूत्रे चतुर्गुणे ॥ ४३ ॥
रक्षोग्रहान् वारयते पानाभ्यंजननावनैः ।
पिशाचानां बलिः सीधुपिण्याकः पललं दधि ॥४४ ॥
मूलकं लवणं सर्पिः सभूतोदनयावकम् ।
हरिद्राद्वयमंजिष्ठामिशिसैंधवनागरम् ॥ ४५ ॥
हिंगुप्रियंगुत्रिकटुरसोनत्रिफला वचा ।
पाटलाश्वेतकटभीशिरीषकुसुमैर्घृतम् ॥ ४६ ॥
गोमूत्रपादिकं सिद्धं पानाभ्यंजनयोर्हितम् ।
बस्तांबुपिष्टैस्तैरेव योज्यमंजननावनम् ॥ ४७ ॥
देवर्षिपितृगंधर्वे तीक्ष्णं नस्यादि वर्जयेत् ।
सर्पिःपानादिमृद्वस्मिन् भैषज्यमवचारयेत् ॥ ४८ ॥
ऋते पिशाचान्सर्वेषु प्रतिकूलं च नाचरेत् ।

सवैद्यमातुरं घ्नंति क्रुद्धास्ते हि महौजसः ॥ ४९ ॥
ईश्वरं द्वादशभुजं नाथमार्यावलोकितम् ।
सर्वव्याधिचिकित्सं तं जपन् सर्वग्रहान् जयेत् ॥ ५० ॥
तथोन्मादानपस्मारानन्यं वा चित्तविप्लवम् ।
महाविद्यां च मायूरीं शुचिं तं श्रावयेत्सदा ॥ ५१
भूतेशं पूजयेत् स्थाणुं प्रमथाख्यांश्च तद्गणान् ।
जपन् सिद्धांश्च तन्मंत्रान् ग्रहान्सर्वानपोहति ॥ ५२ ॥
यच्चानंतरयोः किंचिद्वक्ष्यतेऽध्याययोर्हितम् ।
यच्चोक्तमिह तत्सर्वं प्रयुंजीत परस्परम् ॥ ५३ ॥

---

## षष्ठोऽध्यायः ।

अथाऽत उन्मादप्रतिषेधं व्याख्यास्यामः ।
"उन्मादाः षट् पृथग्दोषनिचयाधिविषोद्भवाः ।
उन्मादो नाम मनसो दोषैरुन्मार्गगैर्मदः ॥ १ ॥
शारीरमानसैर्दुष्टैरहितादन्नपानतः ।
विकृतासात्म्यसमलाद्विषमादुपयोगतः ॥ २ ॥
विषमस्याल्पसत्वस्य व्याधिवेगसमुद्गमात् ।
क्षीणस्य चेष्टावैषम्यात्पूज्यपूजाव्यतिक्रमात् ॥ ३ ॥
आधिभिश्चित्तविभ्रंशाद् विषेणोपविषेण च ।
एभिर्विहीनसत्वस्य हृदि दोषाः प्रदूषिताः ॥ ४ ॥
धियो विधाय कालुष्यं हत्वा मार्गान् मनोवहान् ।

उन्मादं कुर्वते तेन धीविज्ञानस्मृतिभ्रमात् ॥ ५ ॥
देहो दुःखसुखभ्रष्टो भ्रष्टसारथिवद्रथः ।
भ्रमत्यचिंतितारंभः

तत्र वातात्कृशांगता ॥ ६ ॥
अस्थाने रोदनाक्रोशहसितस्मितनर्तनम् ।
गीतवादित्रवागंगविक्षेपास्फोटनानि च ॥ ७ ॥
असाम्ना वेणुवीणादिशब्दानुकरणं मुहुः ।
आस्यात्फेनागमोजस्रमटनं बहुभाषिता ॥ ८ ॥
अलंकारोनलंकारैरयानैर्गमनोद्यमः ।
गृद्धिरभ्यवहार्येषु तल्लाभे चावमानता ॥ ९ ॥
उत्पिंडितारुणाक्षित्वं जीर्णे चान्ने गदोद्भवः ।
पित्तात्संतर्जनं क्रोधो मुष्टिलोष्टाद्यभिद्रवः ॥ १० ॥
शीतच्छायोदकाकांक्षा नग्नत्वं पीतवर्णता ।
असत्यज्वलनज्वालातारकादीपदर्शनम् ॥ ११ ॥
कफादरोचकश्छर्दिरल्पेहाहारवाक्यता ।
स्त्रीकामता रहःप्रीतिर्लालासिंघाणकस्रुतिः ॥ १२ ॥
बैभत्स्यं शौचविद्वेषो निद्रा श्वयथुराननें ।
उन्मादो बलवान् रात्रौ भुक्तमात्रे च जायते ॥ १३ ॥
सर्वायतनसंस्थानसंनिपाते तदात्मकम् ।
उन्मादं दारुणं विद्यात् तं भिषक्परिवर्जयेत् ॥ १४ ॥
धनकांतादिनाशेन दुःसहेनाभिषंगवान् ।

पांडुर्दीनो मुहुर्मुह्यन् हाहेति परिदेवते ॥ १५ ॥
रोदित्यकस्मान्म्रियते तद्गुणान् बहु मन्यते।
शोकक्लिष्टमना ध्यायन् जागरूको विचेष्टते ॥ १६ ॥
विषेण श्यावववदनो नष्टच्छायाबलेंद्रियः ।
वेगांतरेऽपि संभ्रांतो रक्ताक्षस्तं विवर्जयेत् ॥ १७ ॥
अथानिलज उन्मादे स्नेहपानं प्रयोजयेत् ।
पूर्वमावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥ १८ ॥
कफपित्तभवेऽप्यादौ वमनं सविरेचनम् ।
स्निग्धस्विन्नस्य बस्तिं च शिरसः सविरेचनम् ॥१९॥
तथास्य शुद्धदेहस्य प्रसादं लभते मनः ।
इत्थमप्यनुवृत्तौ तु तीक्ष्णं नावनमंजनम् ॥ २० ॥
हर्षणाश्वासनोत्रासभयताडनतर्जनम् ।
अभ्यंगोद्वर्तनालेपधूमान् पानं च सर्पिषः ॥ २१ ॥
युंज्यात्तानि हि शुद्धस्य नयंति प्रकृतिं मनः ।
हिंगुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम् ॥ २२ ॥
सिद्धं समूत्रमुन्मादभूतापस्मारनुत्परम् ।
द्वौ प्रस्थौ स्वरसाद् ब्राह्मया घृतप्रस्थं च साधितम्॥२३॥
व्योषश्यामात्रिवृद्दंतीशंखपुष्पीनृपद्रुमैः ।
ससप्तलाकृमिहरैः कल्कितैरक्षसंमितैः ॥ २४ ॥
पलवृद्ध्या प्रयुंजीत परं मात्राचतुष्पलम् ।
उन्मादकुष्ठापस्मारहरं वंध्यासुतप्रदम् ॥ २५ ॥

वाक्स्वरस्मृतिमेधाकृद् धन्यं ब्राह्मीघृतं स्मृतम् ।
वराविशालाभद्रैलादेवदार्वेलवालुकैः ॥ २६ ॥
द्विसारिवाद्विरजनीद्विस्थिराफलिनीनतैः ।
बृहतीकुष्ठमंजिष्ठानागकेसरदाडिमैः ॥ २७ ॥
वेल्लतालीसपत्रैलामालतीमुकुलोत्पलैः ।
सदंतीपद्मकहिमैः कर्षांशैः सर्पिषः पचेत् ॥ २८ ॥
प्रस्थं भूतग्रहोन्मादकासापस्मारपाप्मसु ।
पांडुकंडूविषे शोफे मोहे मेहे गरे ज्वरे ॥ २९ ॥
अरेतस्यप्रजसि वा दैवोपहतचेतसि ।
अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके ॥ ३० ॥
बल्यं मंगल्यमायुष्यं कांतिसौभाग्यपुष्टिदम् ।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥ ३१ ॥
एभ्यो द्विसारिवादीनि जले पक्त्वैकाविंशतिः ।
रसे तस्मिन्पचेत्सर्पिर्गृष्टिक्षीरचतुर्गुणम् ॥ ३२ ॥
वीराद्विमेदाकाकोलीकपिकच्छूविषाणिभिः ।
शूर्पपर्णीयुतैरेतन्महाकल्याणकं परम् ॥ ३३ ॥
बृंहणं संनिपातघ्नं पूर्वस्मादधिकं गुणैः ।
जटिला पूतना केशी चारटी मर्कटी वचा ॥ ३४ ॥
त्रायमाणा जया वीरा चोरकः कटुरोहिणी ।
कायस्था शूकरी छत्रा अतिच्छत्रा पलंकषा ॥ ३५ ॥
महापुरुषदंता च वयस्था नाकुलीद्वयम् ।

कटंभरा वृश्चिकाली शालिपर्णी च तैर्घृतम् ॥ ३६ ॥
सिद्धं चातुर्थिकोन्मादग्रहापस्मारनाशनम् ।
महापैशाचकं नाम घृतमेतद्यथामृतम् ॥ ३७ ॥
बुद्धिमेधास्मृतिकरं बालानां चांगवर्धनम् ।
ब्राह्मीमैंद्रीविडंगानि व्योषं हिंगु जटां मुराम् ॥३८॥
रास्नां विशल्यां लशुनं विषघ्नां सुरसां वचाम् ।
ज्योतिष्मतीं नागविन्नामनंतां सहरीतकीम् ॥ ३९ ॥
काच्छीं च हस्तिसूत्रेण पिष्ट्वा छायाविशोषिता ।
वर्तिर्नस्यांजनालेपधूपैरुन्मादसूदनी ॥ ४० ॥
अवपीडाश्च विविधाः सर्षपाः स्नेहसंयुताः ।
कटुतैलेन चाभ्यंगो ध्मापयेच्चास्य तद्रजः ॥ ४१ ॥
सहिंगुस्तीक्ष्णधूमश्च सूत्रस्थानोदितो हितः ।
शृगालशल्यकोलूकजलूकावृषबस्तजैः ॥ ४२ ॥
मूत्रपित्तशकृल्लोमनखचर्मभिराचरेत् ।
धूपधूमांजनाभ्यंगप्रदेहपरिषेचनम् ॥ ४३ ॥
धूपयेत्सततं चैनं श्वगोमत्स्यैस्तु पूतिभिः ।
वातश्लेष्मात्मके प्रायः
पैत्तिके तु प्रशस्यते ॥ ४४ ॥
तिक्तकं जीवनीयं च सर्पिः स्नेहश्च मिश्रकः ।
शिशिराण्यन्नपानानि मधुराणि लघूनि च ॥ ४५ ॥
विध्येच्छिरां यथोक्तां वा तृषं मेद्यामिषस्य वा ।

निवाते शाययेदेवं मुच्यते मतिविभ्रमात् ॥ ४६ ॥
प्रक्षिप्याऽसलिले कूपे शोषयेद्वा बुभुक्षया ।
आश्वासयेत्सुहृत्तं वा वाक्यैर्धर्मार्थसंहितैः ॥ ४७ ॥
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ।
बद्धं सर्षपतैलाक्तं न्यस्तं चोत्तानमातपे ॥ ४८ ॥
कपिकच्छ्वाथवा तप्तैर्लोहतैलजलैः स्पृशेत् ।
कशाभिस्ताडयित्वा वा बद्धं श्वभ्रे विनिःक्षिपेत् ॥४९॥
अथवा वीतशस्त्राश्मजने संतमसे गृहे ।
सर्पेणोद्धृतदंष्ट्रेण दांतैः सिंहैर्गजैश्च तम् ॥ ५० ॥
अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम् ।
भापयेयुर्वधेनैनं तर्जयंतो नृपाज्ञया ॥ ५१ ॥
देहदुःखभयेभ्यो हि परं प्राणभयं मतम् ॥
तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥ ५२ ॥
सिद्धा क्रिया प्रयोज्येयं देशकालाद्यपेक्षया ।
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ॥ ५३ ॥
तस्य तत्सदृशप्राप्तिः सांत्वाश्वासैः शमं नयेत् ।
कामशोकभयक्रोधहर्षेर्ष्यालोभसंभवान् ॥ ५४ ॥
परस्परप्रतिद्वंद्वैरेभिरेव शमं नयेत् ।
भूतानुबंधमीक्षेत प्रोक्तलिंगाधिकाकृतिम् ॥ ५५ ॥
यद्युन्मादे ततः कुर्याद्भूतनिर्दिष्टमौषधम् ।
बलिं च दद्यात्पललं यावकं सक्तुपिंडिकाम् ॥ ५६ ॥

स्निग्धं मधुरमाहारं तंडुलान् रुधिरोक्षितान् ।
पक्वामकानि मांसानि सुरामैरेयमासवम् ॥ ५७ ॥
अतिमुक्तस्य पुष्पाणि जात्याः सहचरंस्य च ।
चतुष्पथे गवां तीर्थे नदीनां संगमेषु च ॥ ५८ ॥
निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ।
निजागंतुभिरुन्मादैः सत्ववान्न स युज्यते ॥ ५९ ॥
प्रसाद इंद्रियार्थानां बुद्ध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ ६० ॥

---

## सप्तमोऽध्यायः ।

अथाऽतोऽपस्मारप्रतिषेधं व्याख्यास्यामः ।
“स्मृत्यपायो ह्यपस्मारः संधिसत्त्वाभिसंप्लवात् ।
जायतेऽभिहते चित्ते चिंताशोकभयादिभिः ॥ १ ॥
उन्मादवत्प्रकुपितैश्चित्तदेहगतैर्मलैः ।
हते सत्त्वे हृदि व्याप्ते संज्ञावाहिषु खेषु च ॥ २ ॥
तमोविशन्मूढमतिर्बीभत्साः कुरुते क्रियाः ।
दंतान् खादन् वमन् फेनं हस्तौ पादौ च विक्षिपन्।३।
पश्यन्नसंति रूपाणि प्रस्खलन्पतति क्षितौ ।
विजिह्माक्षिभ्रुवो दोषवेगेऽतीते विबुध्यते ॥ ४ ॥
कालांतरेण स पुनश्चैवमेव विचेष्टते ।
अपस्मारश्चतुर्भेदो वाताद्यैर्निचयेन तु ॥ ५ ॥

रूपमुत्पित्स्यमानेऽस्मिन् हृत्कंपः शून्यता भ्रमः ।
तमसो दर्शनं ध्यानं भ्रूव्युदासोक्षिवैकृतम् ॥ ६ ॥
अशब्दश्रवणं स्वेदो लालासिंघाणकस्रुतिः ।
अविपाकोऽरुचिर्मूर्छा कुक्ष्याटोपो बलक्षयः ॥ ७ ॥
निद्रानाशोंऽगमर्दस्तृट् स्वप्ने गानं सनर्तनम् ।
पानं मद्यस्य तैलस्य तयोरेव च मेहनम् ॥ ८ ॥
तत्र वातात्स्फुरत्सक्थि प्रपतंश्च मुहुर्मुहुः ।
अपस्मारेति संज्ञां च लभते विस्वरं रुदन् ॥ ९ ॥
उत्पिंडिताक्षः श्वसिति फेनं वमति कंपते ।
आविध्यति शिरो दंतान् दशत्याध्मातकंधरः ॥ १० ॥
परितो विक्षिपत्यंगं विषमं विनतांगुलिः ।
रूक्षश्यावारुणाक्षित्वङ्नखास्यः कृष्णमीक्षते ॥ ११ ॥
चपलं परुषं रूपं विरूपं विकृताननम् ।
अपस्मरति पित्तेन मुहुः संज्ञां च विंदति ॥ १२ ॥
पीतफेनाक्षिवक्त्रत्वगास्फालयति मेदिनीम् ।
भैरवादीप्तरुषितरूपदर्शी तृषान्वितः ॥ १३ ॥
कफाच्चिरेण ग्रहणं चिरेणैव विबोधनम् ।
चेष्टाऽल्पा भूयसी लाला शुक्लनेत्रनखास्यता ॥ १४ ॥
शुक्लाभरूपदर्शित्वं
सर्वलिंगं तु वर्जयेत् ।
अथाऽऽवृतानां धीचित्तहृत्खानां प्राक्प्रबोधनम् ॥ १५ ॥

तीक्ष्णैः कुर्यादपस्मारे कर्मभिर्वमनादिभिः ।
वातिकं बस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः ॥ १६ ॥
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ।
सर्वतस्तु विशुद्धस्य सम्यगाश्वासितस्य च ॥ १७ ॥
अपस्मारविमोक्षार्थं योगान्संशमनान् शृणु ।
गोमयस्वरसक्षीरदधिमूत्रैः श्रृतं हविः ॥ १८ ॥
अपस्मारज्वरोन्मादकामलांतकरं पिबेत् ।
द्विपंचमूलीत्रिफलाद्विनिशाकुटजत्वचः ॥ १९ ॥
सप्तकर्णमपामार्गं नीलिनीं कटुरोहिणीम् ।
शम्याकपुष्करजटाफल्गुमूलदुरालभाः ॥ २० ॥
द्विपलाः सलिलद्रोणे पक्त्वा पादावशेषिते ।
भार्गीपाठाढकीकुंभनिकुंभव्योषरोहिषैः ॥२१॥
मूर्वाभूतिकभूनिंबश्रेयसीसारिवाद्वयैः ।
मदयंत्यग्निनिचुलैरक्षांशैः सर्पिषः पचेत् ॥२२॥
प्रस्थं तद्वद् द्रवैः पूर्वैः पंचगव्यमिदं महत् ।
ज्वरापस्मारजठरभगंदरहरं परम् ॥ २३ ॥
शोफार्शःकामलापांडुगुल्मकासग्रहापहम् ।
ब्राह्मीरसवचाकुष्ठशंखपुष्पीश्रृतं घृतम् ॥ २४ ॥
पुराणं मेध्यमुन्मादालक्ष्म्यपस्मारपाप्मजित् ।
तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ॥२५॥
क्षीरद्रोणे पचेत्सिद्धमपस्मारविमोक्षणम् ।

कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे ॥२६॥
कार्षिकैर्जीवनीयैश्च सर्पिःप्रस्थं विपाचयेत् ।
वातपित्तोद्भवं क्षिप्रमपस्मारं निहंति तत् ॥२७॥
तद्वत्काशविदारीक्षुकुशक्काथश्टृतं पयः
कूष्मांडस्वरसे सर्पिरष्टादशगुणे श्टृतम् ॥२८॥
यष्टीकल्कमपस्मारहरं धीवाक्स्वरप्रदम् ।
कपिलानां गवां पित्तं नावनं परमं हितम् ॥२९॥
श्वश्टृगालबिडालानां सिंहादीनां च पूजितम् ।
गोधानकुलनागानां वृषभर्क्षगवामपि ॥ ३० ॥
पित्तेषु साधितं तैलं नस्येऽभ्यंगे च शस्यते ।
त्रिफलाव्योषपीतद्रुयवक्षारफणिज्जकैः ॥३१॥
श्यामापामार्गकारंजबीजैस्तैलं विपाचितम् ।
बस्तमूत्रे हितं नस्यं चूर्णं वाध्मापयेद्भिषक् ॥३२॥
नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः ।
तुंडैः पक्षैः पुरीषैश्च धूममस्य प्रयोजयेत् ॥ ३३ ॥
शीलयेत्तैललशुनं पयसा वा शतावरीम् ।
ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम् ॥ ३४ ॥
समं क्रुद्धैरपस्मारो दोषैः शारीरमानसैः ।
यज्जायते यतश्चैष महामर्मसमाश्रयः ॥३५॥
तस्माद्रसायनैरेनं दुश्चिकित्स्यमुपाचरेत् ।
तदार्तं चाग्नितोयादेर्विषमात्पालयेत्सदा ॥३६॥

मुक्तं मनोविकारेण त्वमित्थं कृतवानिति ।
न ब्रूयाद्विषयैरिष्टैः क्लिष्टं चेतोऽस्य बृंहयेत् ॥३७॥

इत्यष्टांगहृदये भूततंत्रं तृतीयं समाप्तम् ।

---

## अष्टमोऽध्यायः ।

अथाऽतो वर्त्मरोगविज्ञानमध्यायं व्याख्यास्यामः ।
"सर्वरोगनिदानोक्तैरहितैः कुपिता मलाः ।
अचक्षुष्यैर्विशेषेण प्रायः पित्तानुसारिणः ॥ १ ॥
शिराभिरूर्ध्वं प्रसृता नेत्रावयवमाश्रिताः ।
वर्त्मसंधिं सितं कृष्णं दृष्टिं वा सर्वमक्षि वा ॥२॥
रोगान् कुर्युः
चलस्तत्र प्राप्य वर्त्माश्रयाः सिराः ।
सुप्तोत्थितस्य कुरुते वर्त्मस्तंभं सवेदनम् ॥३॥
पांशुपूर्णाभनेत्रत्वं कृच्छ्रोन्मीलनमश्रु च ।
विमर्दनात्स्याच्च शमः कृच्छ्रोन्मीलं वदंति तम् ॥४॥
चालयन्वर्त्मनी वायुर्निमेषोन्मेषणं मुहुः ।
करोत्यरुङ् निमेषोऽसौ
वर्त्म यत्तु निमील्यते ॥५॥
विमुक्तसंधि निश्चेष्टं हीनं वातहतं हि तत् ।
कृष्णाः पित्तेन बह्वयोऽन्तर्वर्त्म कुंभीकबीजवत् ॥६॥

आध्मायंते पुनर्भिन्नाः पिटिकाः कुंभिसंज्ञिताः ।
सदाहक्लेदनिस्तोदं रक्ताभं स्पर्शनाक्षमम् ॥७॥
पित्तेन जायते वर्त्म पित्तोत्क्लिष्टमुशंति तत् ।
करोति कंडूं दाहं च पित्तं पक्ष्मांतमास्थितम् ॥ ८ ॥
पक्ष्मणां शातनं चानु पक्ष्मशातं वदंति तम् ।
पोथक्यः पिटिकाः श्वेताः सर्षपाभा घनाः कफात्॥९॥
शोफोपदेहरुक्कंडूपिच्छिलाश्रुसमन्विताः ।
कफोत्क्लिष्टं भवेद्वर्त्म स्तंभक्लेदोपदेहवत् ॥ १० ॥
ग्रंथिः पांडुररुक्पाकः कंडूमान् कठिनः कफात् ।
कोलमात्रः स लगणः किंचिदल्पस्ततोऽपि वा ॥ ११॥
रक्ता रक्तेन पिटिकास्तत्तुल्यपिटिकाचिताः ।
उत्संगाख्याः

तथोत्क्लिष्टं राजिमत्स्पर्शनाक्षमम् ॥ १२ ॥
अर्शोऽधिमांसं वर्त्मांतः स्तब्धं स्निग्धं सदाहरुक् ।
रक्तं रक्तेन तत्स्रावि छिन्नं छिन्नं च वर्धते ॥ १३ ॥
मध्ये वा वर्त्मनोंऽते वा कंडूषारुग्वती स्थिरा ।
मुद्गमात्रासृजा ताम्रा पिटिकांजननामिका ॥१४॥
दोषैर्वर्त्म बहिः शूनं यदंतः सूक्ष्मखाचितम् ।
सस्रावमंतरुदकबिसाभं बिसवर्त्म तत् ॥ १५ ॥
यद्वर्त्मोत्क्लिष्टमुत्क्लिष्टमकस्मान्म्लानतामियात् ।
रक्तदोषत्रयोत्क्लेशाद् वदंत्युत्क्लिष्टवर्त्म तत् ॥ १६ ॥
श्याववर्त्म मलैः सास्रैः श्यावं रुक्क्लेदशोफवत् ।

श्लिष्टाख्यवर्त्मनी श्लिष्टे कंडूश्वयथुरागिणी ॥ १७ ॥
वर्त्मनोंऽतः खरा रूक्षाः पिटिकाः सिकतोपमाः ।
सिकतावर्त्म
कृष्णं तु कर्दमं कर्दमोपमम् ॥ १८ ॥
वहलं बहलैर्मांसैः सवर्णैश्चीयते समैः
कुकूणकः शिशोरेव दंतोत्पत्तिनिमित्तजः ॥ १९ ॥
स्यात्तेन शिशुरुच्छूनताम्राक्षो वीक्षणाक्षमः ।
स वर्त्मशूलपैच्छिल्यकर्णनासाक्षिमर्दनः ॥ २० ॥
पक्ष्मोपरोधे संकोचो वर्त्मनां जायते तथा ।
खरतांतर्मुखत्वं च लोम्नामन्यानि वा पुनः ॥ २१ ॥
कंटकैरिव तीक्ष्णाग्रैर्घृष्टं तैरक्षि सूयते ।
उष्यते चानिलादिद्विडल्पाहः शांतिरुद्धृतैः ॥ २२ ॥
कनीनके बहिर्वर्त्म कठिनो ग्रंथिरुन्नतः ।
ताम्रः पक्वोऽस्रपूयास्रुदलज्याध्मायते मुहुः ॥ २३ ॥
वर्त्मांतर्मांसपिंडाभः श्वयथुर्ग्रथितो रुजः ।
सास्रैः स्यादर्बुदो दोषैर्विषमो बाह्यतश्चलः ॥ २४ ॥
चतुर्विंशतिरित्येते व्याधयो वर्त्मसंश्रयाः ।
आद्योऽत्र भेषजैः साध्यो द्वौ ततोऽर्शश्च वर्जयेत् ॥ २५ ॥
पक्ष्मोपरोधो याप्यः स्याच्छेषान्छस्त्रेण साधयेत् ।
कुट्टयेत्पक्ष्मसदनं छिंद्यात्तेष्वपि चार्बुदम् ॥ २६ ॥
भिंद्याल्लगणकुंभीकाबिसोत्संगांजनालजीः ।

पोथकीश्यावसिकता श्लिष्टोत्क्लिष्टचतुष्टयम् ।
सकर्दमं सबहलं विलिखेत्सकुकूणकम्" ॥ २७ ॥

---

## नवमोऽध्यायः।

अथाऽतो वर्त्मरोगप्रतिषेधं व्याख्यास्यामः ।
"कृच्छ्रोन्मीले पुराणाज्यं द्राक्षाकल्कांबुसाधितम् ।
ससितं योजयेत्स्निग्धं नस्यधूमांजनादि च ॥ १ ॥
कुंभीकावर्त्म लिखितं सैंधवप्रतिसारितम् ।
यष्टीधात्रीपटोलीनां क्वाथेन परिषेचयेत् ॥ २ ॥
निवातेऽधिष्ठितस्याप्तैः शुद्धस्योत्तानशायिनः ।
बहिः कोष्णांबुतप्तेन स्वेदितं वर्त्म वाससा ॥ ३ ॥
निर्भुज्य वस्त्रांतरितं वामांगुष्ठांगुलीधृतम् ।
न स्रंसते चलति वा वर्त्मैवं सर्वतस्ततः ॥ ४ ॥
मंडलाग्रेण तत्तिर्यक् कृत्वा शस्त्रपदांकितम् ।
लिखेत्तेनैव पत्रैर्वा शाकशेफालिकादिजैः ॥ ५ ॥
फेनेन तोयराशेर्वा पिचुना प्रसृजन्नसृक् ।
स्थिते रक्ते सुलिखितं सक्षौद्रैः प्रतिसारयेत् ॥ ६ ॥
यथास्वमुक्तैरनु च प्रक्षाल्योष्णेन वारिणा ।
घृतेनासिक्तमभ्यक्तं बध्नीयान्मधुसर्पिषा ॥ ७ ॥
ऊर्ध्वाधः कर्णयोर्दत्त्वा पिंडीं च यवसक्तुभिः ।
द्वितीयेऽहनि मुक्तस्य परिषेकं यथायथम् ॥ ८ ॥

कुर्यात् चतुर्थे नस्यादीन्मुंचेदेवाह्नि पंचमे ।
ससं नखनिभं शोफकंडूघर्षाद्यपीडितम् ॥ ९ ॥
विद्यात्सुलिखितं वर्त्म लिखेद् भूयो विपर्यये ।
रुक्पक्ष्मवर्त्मसदनं स्रंसनादतिलेखनात् ॥ १० ॥
स्नेहस्वेदादिकस्तस्मिन्निष्टो वातहरः क्रमः ।
अभ्यज्य नवनीतेन श्वेतरोध्रं प्रलेपयेत् ॥ ११ ॥
एरंडमूलकल्केन पुटपाके पचेत्ततः ।
स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोटलीकृतम् ॥ १२ ॥
स्त्रियाः क्षीरे छगल्या वा मृदितं नेत्रसेचनम् ।
शालितंदुलकल्केन लिप्तं तद्वत्परिष्कृतम् ॥ १३ ॥
कुर्यान्नेत्रेऽतिलिखिते मृदितं दधिमस्तुना ।
केवलेनाऽपि वा सेकं मस्तुना जांगलाशिनः ॥ १४ ॥
पिटिका व्रीहिवक्रेण भित्त्वा तु कठिनोन्नताः ।
निष्पीडयेदनु विधिः परिशेषस्तु पूर्ववत् ॥ १५ ॥
लेखने भेदने चायं क्रमः सर्वत्र वर्त्मनि ।
पित्तास्रोत्क्लिष्टयोः स्वादुस्कंधसिद्धेन सर्पिषा ॥ १६ ॥
सिराविमोक्षः स्निग्धस्य त्रिवृच्छ्रेष्ठं विरेचनम् ।
लिखिते स्रुतरक्ते च वर्त्मनि क्षालनं हितम् ॥ १७ ॥
यष्टीकषायः सेकस्तु क्षीरं चंदनसाधितम् ।
पक्ष्मणां सदने सूच्या रोमकूपान् विकुट्टयेत् ॥ १८ ॥
ग्राहयेद्वा जलौकोभिः पयसेक्षुरसेन वा ।

वमनं नावनं सर्पिः श्रृतं मधुरशीतलैः ॥ १९ ॥
संचूर्ण्य पुष्पकासीसं भावयेत्सुरसारसैः ।
ताम्रे दशाहं परमं पक्ष्मशाते तदंजनम् ॥ २० ॥
पोथकीर्लिखिताः शुंठीसैंधवप्रतिसारिताः ।
उष्णांबुक्षालिताः सिंचेत् खदिराढकिशिग्रुभिः ॥२१॥
अप्सिद्धैर्द्विनिशाश्रेष्ठामधुकैर्वा समाक्षिकैः ।
कफोत्क्लिष्टे विलिखिते सक्षौद्रैः प्रतिसारणम् ॥२२॥
सूक्ष्मैः सैंधवकासीसमनोह्वाकणताक्ष्यर्जैः ।
वमनांजननस्यादि सर्वं च कफजिद्धितम् ॥ २३ ॥
कर्तव्यं लगणेप्येतदशांतावग्निना दहेत् ।
कुकूणे खदिरश्रेष्ठानिंबपत्रैः श्रृतं घृतम् ॥ २४॥
पीत्वा धात्री वमेत्कृष्णायष्टीसर्षपसैंधवैः ।
अभयापिप्पलीद्राक्षाक्राथेनैनां विरेचयेत् ॥ २५ ॥
मुस्ताद्विरजनीकृष्णाकल्केनालेपयेत्स्तनौ ।
धूपयेत्सर्षपैः साज्यैः

शुद्धां क्राथं च पाययेत् ॥ २६ ॥
पटोलमुस्तमृद्वीकागुडूचीत्रिफलोद्भवम् ।
शिशोस्तु लिखितं वर्त्म स्रुतासृग्वांबुजन्मभिः ॥२७॥
धात्र्यश्मंतकजंबूत्थपत्रक्राथेन सेचयेत् ।
प्रायः क्षीरघृताशित्वाद्बालानां श्लेष्मजा गदाः ॥२८॥
तस्माद्वमनमेवाग्रे सर्वव्याधिषु पूजितम् ।

सिंधूत्थकृष्णापामार्गबीजाज्यस्तन्यमाक्षिकम् ॥ २९ ॥
चूर्णो वचायाः सक्षौद्रो मदनं मधुकान्वितम् ।
क्षीरं क्षीरान्नमन्नं च भजतः क्रमशः शिशोः ॥ ३० ॥
वमनं सर्वरोगेषु विशेषेण कुकूणके ।
सप्तलारससिद्धाज्यं योज्यं चोभयशोधनम् ॥ ३१ ॥
द्विनिशारोध्रयष्ट्याह्वरोहिणीनिंबपल्लवैः ।
कुकूणके हिता वर्तिः पिष्टैस्ताम्ररजोन्वितैः ॥ ३२ ॥
क्षीरक्षौद्रघृतोपेतं दग्धं वा लोहजं रजः ।
एलारसोनकतकशंखोषणफणिज्जकैः ॥ ३३ ॥
वर्तिः कुकूणपोथक्योः सुरापिष्टैः सकट्फलैः ।
पक्ष्मरोधे प्रवृद्धेषु शुद्धदेहस्य रोमसु ॥ ३४ ॥
उत्सृज्य द्वौ भ्रुवोऽधस्ताद्भागौ भागं च पक्ष्मतः ।
यवमात्रं यवाकारं तिर्यक्छित्त्वाऽऽर्द्रवाससा ॥ ३५ ॥
अपनेयमसृक् तस्मिन्नल्पीभवति शोणितम् ।
सीव्येत्कुटिलया सूच्या मुद्गमात्रांतरैः पदैः ॥ ३६ ॥
बद्ध्वा ललाटे पट्टं च तत्र सीवनसूत्रकम् ।
नातिगाढश्लथं सूच्या निक्षिपेदथ योजयेत् ॥ ३७ ॥
मधुसर्पिःकवलिकां न चास्मिन्बंधमाचरेत् ।
न्यग्रोधादिकषायैश्च सक्षीरैः सेचयेद्रुजि ॥ ३८ ॥
पंचमे दिवसे सूत्रमपनीयावचूर्णयेत् ।
गैरिकेण व्रणं युञ्ज्यात्तीक्ष्णं नस्यांजनादि च ॥ ३९ ॥

दहेदशांतौ निर्भुज्य वर्त्मदोषाश्रयां वलीम् ।
संदंशेनाधिकं पक्ष्म हृत्वा तस्याश्रयं दहेत् ॥ ४० ॥
सूच्यग्रेणाग्निवर्णेन दाहो बाह्यालजेः पुनः ।
भिन्नस्य क्षारवह्निभ्यां सुच्छिन्नस्यार्बुदस्य च" ॥४१॥

---

## दशमोऽध्यायः ।

अथाऽतः संधिसितासितरोगविज्ञानमारभ्यते ॥
"वायुः क्रुद्धः शिराः प्राप्य जलाभं जलवाहिनीः ।
अस्रु स्रावयते वर्त्मशुक्लसंधेः कनीनकात् ॥ १ ॥
तेन नेत्रं सरुग्रागशोफं स्यात्स जलास्रवः ।
कफात्कफस्रवे श्वेतं पिच्छिलं बहलं स्रवेत् ॥ २ ॥
कफेन शोफस्तीक्ष्णाग्रः क्षारबुद्बुदकोपमः ।
पृथुमूलबलः स्निग्धः सवर्णमृदुपिच्छिलः ॥ ३ ॥
महानपाकः कंडूमानुपनाहः स नीरुजः ।
रक्ताद् रक्तस्रवे ताम्र बहूष्णं चाश्रु संस्रवेत् ॥ ४ ॥
वर्त्मसंध्याश्रया शुक्ले पिटिका दाहशूलिनी ।
ताम्रा मुद्गोपमा भिन्ना रक्तं स्रवति पर्वणी ॥ ५ ॥
पूयास्रावे मलाः सास्रा वर्त्मसंधेः कनीनकात् ।
स्रावयंति मुहुः पूयं सास्रत्वङ्मांसपाकतः ॥ ६ ॥
पूयालसो व्रणः सूक्ष्मः शोफसंरंभपूर्वकः ।
कनीनसंधावाध्मायी पूयास्रावी सवेदनः ॥ ७ ॥

कनीनस्यांतरलजी शोफो रुक्तोददाहवान् ।
अपांगे वा कनीने वा कंडूषापक्ष्मपोटवान् ॥ ८ ॥
पूयास्रावी कृमिग्रंथिर्ग्रंथिकृमियुतोऽर्तिमान् ।
उपनाहकृमिग्रंथिपूयालसकपर्वणीः ॥ ९ ॥
शस्त्रेण साधयेत्पंच सालजीनास्रवांस्त्यजेत् ।
पित्तं कुर्यात्सिते बिंदूनसितश्यावपीतकान् ॥ १० ॥
मलाक्तादर्शतुल्यं वा सर्वं शुक्लं सदाहरुक् ।
रोगोऽयं शुक्तिकासंज्ञः सशकृद्भेदतृड्ज्वरः ॥ ११ ॥
कफाच्छुक्ले समं श्वेतं चिरवृद्ध्यधिमांसकम् ।
शुक्लार्म

शोफस्त्वरुजः सवर्णो बहलो मृदुः ॥ १२ ॥
गुरुः स्निग्धोंऽबुबिंद्वाभो बलासग्रथितं स्मृतम् ।
बिंदुभिः पिष्टधवलैरुत्सन्नैः पिष्टकं वदेत् ॥ १३ ॥
रक्तराजीततं शुक्लमुष्यते यत्सवेदनम् ।
अशोफाश्रूपदेहं च शिरोत्पातः स शोणितात् ॥ १४ ॥
उपेक्षितः सिरोत्पातो राजीस्ता एव वर्धयन् ।
कुर्यात्सास्रं सिराहर्षं तेनाक्ष्युद्वीक्षणाक्षमम् ॥ १५ ॥
सिराजाले सिराजालं बृहद्रक्तं घनोन्नतम् ।
शोणितार्म समं श्लक्ष्णं पद्माभमधिमांसकम् ॥ १६ ॥
नीरुक् श्लक्ष्णोऽर्जुनं बिंदुः शशलोहितलोहितः ।
मृद्वाशुवृद्ध्यरुङ्मांसं प्रस्तारि श्यावलोहितम् ॥१७ ॥

प्रास्तार्यर्म मलैः सास्त्रैः

स्नावार्म स्नावसंनिभम् ।

शुक्लासृक्पिंडवच्छ्यावं यन्मांसं बहलं पृथु ॥ १८ ॥

अधिमांसार्म तद्

दाहवर्षवंत्यः सिरावृताः ।

कृष्णासन्नाः सिरासंज्ञाः पिटिकाः सर्षपोपमाः॥ १९ ॥

शुक्तिहर्षशिरोत्पातपिष्टकग्रथितार्जुनम् ।

साधयेदौषधैः षट्कं शेषं शस्त्रेण सप्तकम् ॥ २० ॥

नवोत्थं तदपि द्रव्यैः

अर्मोक्तं यच्च पंचधा ।

तच्छेद्यमसितप्राप्तं मांसस्नावसिरावृतम् ॥ २१ ॥

चर्मोद्दालवदुच्छ्रायि दृष्टिप्राप्तं च वर्जयेत् ।

पित्तं कृष्णेऽथवा दृष्टौ शुक्रं तोदास्रुरागवत् ॥ २२ ॥

छित्त्वा त्वचं जनयति तेन स्यात्कृष्णमंडलम् ।

पक्वजंबूनिभं किंचिन्निम्नं च क्षतशुक्रकम् ॥ २३ ॥

तत्कृच्छ्रसाध्यं याप्यं तु द्वितीयपटलव्यधात् ।

तत्र तोदादिबाहुल्यं सूचीविद्धाभकृष्णता ॥ २४ ॥

तृतीयपटलच्छेदादसाध्यं निचितं व्रणैः ।

शंखशुक्लं कफात्साध्यं नातिरुक् शुद्धशुक्रकम् ॥२५॥

आताम्रपिच्छलास्रस्रुदाताम्रपिटिकातिरुक् ।

अजाविट्सदृशोच्छ्रायकार्ष्ण्या वर्ज्याऽसृजाजका ॥२६॥

सिराशुक्रं मलैः सास्त्रैस्तज्जुष्टं कृष्णमंडलम् ।
सतोददाहताम्राभिः सिराभिरवतन्यते ॥ २७ ॥
अनिमित्तोष्णशीताच्छघनास्त्रस्रुक् च तत्त्यजेत् ।
दोषैः सास्त्रैः सकृत्कृष्णं नीयते शुक्ररूपताम् ॥२८ ॥
धवलाभ्रोपलिप्ताभं निष्पावार्धदलाकृति ।
अतितीव्ररुजारागदाहश्वयथुपीडितम् ॥ २९ ॥
पाकात्ययेन तच्छुक्रं वर्जयेत्तीव्रवेदनम् ।
यस्य वा लिंगनाशोंऽतः श्यावं यद्वा सलोहितम् ।
अत्युत्सेधावगाढं वा सास्रनाडीव्रणावृतम् ॥ ३० ॥
पुराणं विषमं मध्ये विच्छिन्नं यच्च शुक्रकम् ।
पंचेत्युक्ता गदाः कृष्णे साध्यासाध्यविभागतः ”

---

## एकादशोऽध्यायः

अथातः संधिसितासितरोगप्रतिषेधं व्याख्यास्यामः ।
“उपनाहं भिषक् स्विन्नं भिन्नं व्रीहिमुखेन च ।
लेखयेन्मंडलाग्रेण ततश्च प्रतिसारयेत् ॥ १ ॥
पिप्पलीक्षौद्रसिंधूत्थैर्बध्नीयात्पूर्ववत्ततः ।
पटोलपत्रामलककाथेनाश्चोतयेच्च तम् ॥ २ ॥
पर्वणी बडिशेनात्ता बाह्यसंधित्रिभागतः ।
वृद्धिपत्रेण वर्ध्याऽर्धे स्यादश्रुगतिरन्यथा ॥ ३ ॥
चिकित्सा चार्मवत्क्षौद्रसैंधवप्रतिसारिता ।

पूयालसे सिरां विध्येत्ततस्तमुपनाहयेत् ॥ ४ ॥
कुर्वीत चाक्षिपाकोक्तं सर्वं कर्म यथाविधि ।
सैंधवार्द्रककासीसलोहताम्रैः सुचूर्णितैः ॥ ५ ॥
चूर्णांजनं प्रयुंजीत सक्षौद्रैर्वा रसक्रियाम् ।
कृमिग्रंथिं करीषेण स्विन्नं भित्त्वा विलिख्य च ॥ ६ ॥
त्रिफलाक्षौद्रकासीससैंधवैः प्रतिसारयेत् ।
पित्ताभिष्यंदवच्छुक्ति

बलासाह्वयपिष्टकौ ॥ ७ ॥
कफाभिष्यंदवन्मुक्त्वा सिराव्यधमुपाचरेत् ।
बीजपूररसाक्तं च व्योषकट्फलमंजनम् ॥ ८ ॥
जातीमुकुलसिंधूत्थदेवदारुमहौषधैः ।
पिष्टैः प्रसन्नया वर्तिः शोफकंडूघ्नमंजनम् ॥ ९ ॥
रक्तस्यंदवदुत्पातहर्षजालार्जुने क्रिया ।
सिरोत्पाते विशेषेण घृतमाक्षिकमंजनम् ॥ १० ॥
सिराहर्षे तु मधुना श्लक्ष्णघृष्टं रसांजनम् ।
अर्जुने शर्करामस्तुक्षौद्रैराश्चोतनं हितम् ॥ ११ ॥
स्फटिकः कुंकुमं शंखो मधुको मधुनांजनम् ।
मधुना चांजनं शंखः फेनो वा सितया सह ॥ १२ ॥
अर्मोक्तं पंचधा तत्र तनु धूमाविलं च यत् ।
रक्तं दधिनिभं यच्च शुक्रवत्तस्य भेषजम् ॥ १३ ॥
उत्तानस्येतरत् स्विन्नं ससिंधूत्थेन चांजितम् ।

रसेन बीजपूरस्य निमील्याक्षि विमर्दयेत् ॥ १४ ॥
इत्थं संरोपिताक्षस्य प्रचलेऽर्माधिमांसके ।
धृतस्य निश्चलं मूर्ध्नि वर्त्मनोश्च विशेषतः ॥ १५ ॥
अपांगमीक्षमाणस्य वृद्धेऽर्मणि कनीनकात् ।
वली स्याद्यत्र तत्रार्मे बडिशेनावलंबितम् ॥ १६ ॥
नात्यायतं मुचुंड्या वा सूच्या सूत्रेण वा ततः ।
समंतान्मंडलाग्रेण मोचयेदथ माक्षिकम् ॥ १७ ॥
कनीनकमुपानीय चतुर्भागावशेषितम् ।
छिंद्यात्कनीनके रक्षेद्वाहिनीश्चाश्रुवाहिनीः ॥ १८ ॥
कनीनकव्यधादश्रुनाडी चाक्ष्णि प्रवर्तते ।
वृद्धेऽर्मणि तथाऽपांगात्पश्यतोऽस्य कनीनकात् ॥१९॥
सम्यक् छिन्नं मधुव्योषसैंधवप्रतिसारितम् ।
उष्णेन सर्पिषा सिक्तमभ्यक्तं मधुसर्पिषा ॥ २० ॥
बध्नीयात्सेचयेन्मुक्त्वा तृतीयादिदिनेषु च ।
करंजबीजसिद्धेन क्षीरेण क्वथितैस्तथा ॥ २१ ॥
सक्षौद्रैर्द्विनिशारोध्रपटोलीयष्टिकिंशुकैः ।
कुरंटमुकुलोपेतैर्मुचेदेवाह्नि सप्तमे ॥ २२ ॥
सम्यक् छिन्ने भवेत्स्वास्थ्यं हीनातिच्छेदजान्गदान् ।
सेकांजनप्रभृतिभिर्जयेल्लेखनबृंहणैः ॥ २३ ॥
सितामनःशिलालेयलवणोत्तमनागरम् ।
अर्धकर्षोन्मितं तार्क्ष्यं पलार्धं च मधुप्लुतम् ॥ २४ ॥

अंजनं श्लेष्मतिमिरपिल्लशुक्रार्मशोषजित् ।
त्रिफलैकतमद्रव्यत्वचं पानीयकल्किताम् ॥ २५ ॥
शरावपिहितां दग्ध्वा कपाले चूर्णयेत्ततः ।
पृथक्शेषौषधरसैः पृथगेव च भाविता ॥ २६ ॥
सा मषी शोषिता पेष्या भूयो द्विलवणान्विता ।
त्रीण्येतान्यंजनान्याह लेखनानि परं निमिः ॥ २७ ॥
सिराजाले सिरा यास्तु कठिना लेखनौषधैः ।
न सिद्ध्यंत्यर्मवत्तासां पिटिकानां च साधनम् ॥२८॥
दोषानुरोधाच्छुक्रेषु स्निग्धरूक्षं वराघृतम् ।
तिक्तमूर्ध्वमसृक्स्रावो रेकसेकादि चेष्यते ॥ २९ ॥
त्रिस्त्रिवृद्वारिणा पक्वं क्षतशुक्रे घृतं पिबेत् ।
सिरया नु हरेद्रक्तं जलौकोभिश्च लोचनात् ॥ ३० ॥
सिद्धेनोत्पलकाकोलीद्राक्षायष्टिविदारिभिः ।
ससितेनाजपयसा सेचनं सलिलेन वा ॥ ३१ ॥
रागाश्रुवेदनाशांतौ परं लेखनमंजनम् ।
वर्तयो जातिमुकुललाक्षागैरिकचंदनैः ॥ ३२ ॥
प्रसादयंति पित्तास्रं घ्नंति च क्षतशुक्रकम् ।
दंतैर्दंतिवराहोष्ट्रगवाश्वाजखरोद्भवैः ॥ ३३ ॥
सशंखमौक्तिकांभोधिफेनैर्मरिचपादिकैः ।
क्षतशुक्रमपि व्यापि दंतवर्तिर्निवर्तयेत् ॥ ३४ ॥
तमालपत्रं गोदंतशंखफेनोऽस्थि गार्दभम् ।

ताम्रं च वर्तिर्मूत्रेण सर्वशुक्रकनाशिनी ॥ ३५ ॥
रत्नानि दंता शृंगाणि धातवस्त्र्यूषणं त्रुटिः ।
करंजबीजं लशुनो व्रणसादि च भेषजम् ॥ ३६ ॥
सव्रणाव्रणगंभीरत्वक्स्थशुक्रघ्नमंजनम् ।
निम्नमुन्नमयेत्स्नेहपाननस्यरसांजनैः ॥ ३७ ॥
सरुजं नीरुजं तृप्तिपुटपाकेन शुक्रकम् ।
शुद्धशुक्रे निशायष्टीसारिवाशाबरांभसा ॥ ३८ ॥
सेचनं रोध्रपोटल्या कोष्णांभोमग्नयाऽथवा ।
बृहतीमूलयष्ट्याह्वताम्रसैंधवनागरैः ॥ ३९ ॥
धात्रीफलांबुना पिष्टैर्लेपितं ताम्रभाजनम् ।
यवाज्यामलकीपत्रैर्बहुशो धूपयेत्ततः ॥ ४० ॥
तत्र कुर्वीत गुटिकास्ता जलक्षौद्रपेषिताः ।
महानीला इति ख्याताः शुद्धशुक्रहराः परम् ॥ ४१ ॥
स्थिरे शुक्रे घने चाऽस्य बहुशोऽपहरेदसृक् ।
शिरःकायविरेकांश्च पुटपाकांश्च भूरिशः ॥ ४२ ॥
कुर्यान्मरीचवैदेहीशिरीषफलसैंधवैः ।
घर्षणं त्रिफलाक्काथपीतेन लवणेन वा ॥ ४३ ॥
कुर्यादंजनयोगौ वा श्लोकार्धगदिताविमौ ।
शंखकोलास्थिकतकद्राक्षामधुकमाक्षिकैः ॥ ४४ ॥
सुरादंतार्णवमलैः शिरीषकुसुमान्वितैः ।
धात्रीफणिज्जकरसे क्षारो लांगलिकोद्भवः ॥ ४५ ॥

उषितः शोषितश्चूर्णः शुक्रहर्षणमंजनम् ।
मुद्गा वा निस्तुषाः पिष्टाः शंखक्षौद्रसमायुताः ॥ ४६ ॥
सारो मधूकान्मधुमान् मज्जा वाक्षात्समाक्षिका ।
गोखराश्वोष्ट्रदशनाः शंखः फेनः समुद्रजः ॥ ४७ ॥
वर्तिरर्जुनतोयेन हृष्टशुक्रकनाशिनी ।
उत्सन्नं वा सशल्यं वा शुक्रं वालादिभिर्लिखेत् ॥४८॥
शिराशुक्रे त्वदृष्टिघ्ने चिकित्सा व्रणशुक्रवत् ।
पुंड्र्यष्ट्याह्वकाकोलीसिंहीलोहनिशांजनम् ॥ ४९ ॥
कल्कितं छागदुग्धेन सघृतैर्धूपितं यवैः ।
धात्रीपत्रैश्च पर्यायाद्वर्तिर्नेत्रांजनं परम् ॥ ५० ॥
अशांतावर्मवच्छस्त्रमजकाख्ये च योजयेत् ।
अजकायामसाध्यायां शुक्रेऽन्यत्र च तद्विधैः॥ ५१ ॥
वेदनोपशमं स्नेहपानासृक्स्रावणादिभिः ।
कुर्याद्बीभत्सतां जेतुं शुक्रस्योत्सेधसाधनम् ॥ ५२ ॥
नालिकेरास्थिभल्लाततालवंशकरीरजम् ।
भस्माद्भिः स्रावयेत्ताभिर्भावयेत्करभास्थिजम् ॥५३॥
चूर्णं शुक्रेष्वसाध्येषु तद्वद्वर्ण्यघ्नमंजनम् ।
साध्येषु साधनायालमिदमेव च शीलितम् ॥ ५४ ॥
अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ।
समं प्रपीड्यांगुष्ठेन वसार्द्रेणानुपूरयेत् ॥ ५५ ॥
व्रणं गोमांसचूर्णेन बद्धं बद्धं विमुच्य च ।

सप्तरात्राद् व्रणे रूढे कृष्णभागे समे स्थिरे ॥ ५६ ॥
स्नेहांजनं च कर्तव्यं नस्यं च क्षीरसर्पिषा ।
तथापि पुनराध्माने भेदच्छेदादिकां क्रियाम् ॥ ५७ ॥
युक्त्या कुर्याद्यथा नातिच्छेदेन स्यान्निमज्जनम् ।

नित्यं च शुक्रेषु श्रुतं यथास्वं
पाने च मर्शे च घृतं विदध्यात् ।
न हीयते लब्धबला तथांत-
स्तीक्ष्णांजनैर्दृक् सततं प्रयुक्तैः ॥ ५८ ॥

---

## द्वादशोऽध्यायः ।

अथाऽतो दृष्टिरोगविज्ञानीयमध्यायं व्याख्यास्यामः ।
"सिरानुसारिणि मले प्रथमं पटलं श्रिते ।
अव्यक्तमीक्षते रूपं व्यक्तमप्यनिमित्ततः ॥ १ ॥
प्राप्ते द्वितीयं पटलमभूतमपि पश्यति ।
भूतं तु यत्नादासन्नं दूरे सूक्ष्मं च नेक्षते ॥ २ ॥
दूरांतिकस्थं रूपं च विपर्यासेन मन्यते ।
दोषे मंडलसंस्थाने मंडलानीव पश्यति ॥ ३ ॥
द्विधैकं दृष्टिमध्यस्थे बहुधा बहुधा स्थिते ।
दृष्टेरभ्यंतरगते ह्रस्ववृद्धविपर्ययम् ॥ ४ ॥
नांतिकस्थमधःसंस्थे दूरगं नोपरि स्थिते ।
पार्श्वे पश्येन्न पार्श्वस्थे तिमिराख्योऽयमामयः ॥ ५ ॥

प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते ।
तेनोर्ध्वमीक्षते नाधस्तनुचैलावृतोपमम् ॥ ६ ॥
यथावर्णं च रज्येत दृष्टिर्हीयेत च क्रमात् ।
तथाप्युपेक्षमाणस्य चतुर्थं पटलं गतः ॥ ७ ॥
लिंगनाशं मलः कुर्वन् छादयेद् दृष्टिमंडलम् ।
तत्र वातेन तिमिरे व्याविद्धमिव पश्यति ॥ ८ ॥
चलाविलारुणाभासं प्रसन्नं चेक्षते मुहुः ।
जालानि केशान्मशकान् रश्मींश्चोपेक्षितेऽत्र च ॥९॥
काचीभूते दृगरुणा पश्यत्यास्यमनासिकम् ।
चंद्रदीपाद्यनेकत्वं वक्रमृज्वपि मन्यते ॥ १० ॥
वृद्धः काचो दृशं कुर्याद्रजोधूमावृतामिव ।
स्पष्टारुणाभां विस्तीर्णां सूक्ष्मां वा हतदर्शनाम् ११॥
स लिंगनाशो
वाते तु संकोचयति दृक्सिराः ।
दृग्मंडलं विशत्यंतर्गंभीरा दृगसौ स्मृता ॥ १२ ॥
पित्तजे तिमिरे विद्युत्खद्योतोद्योतदीपितम् ।
शिखितित्तिरिपिच्छाभं प्रायो नीलं च पश्यति ॥१३॥
काचे दृक् काचनीलाभा तादृगेव च पश्यति ।
अर्केंदुपरिवेषाग्निमरीचींद्रधनूंषि च ॥ १४ ॥
भृंगनीला निरालोका दृक् स्निग्धा लिंगनाशतः ।
दृष्टिः पित्तेन ह्रस्वाख्या सा ह्रस्वा ह्रस्वदर्शिनी ॥१५॥

भवेत्पित्तविदग्धाख्या पीता पीताभदर्शना ।
कफेन तिमिरे प्रायः स्निग्धं श्वेतं च पश्यति ॥ १६ ॥
शंखेंदुकुंदकुसुमैः कुमुदैरिव चाचितम् ।
काचे तु निष्प्रभेंद्वर्कप्रदीपाद्यैरिवाचितम् ॥ १७ ॥
सिताभा सा च दृष्टिः स्याल्लिंगनाशे तु लक्ष्यते ।
मूर्तः कफो दृष्टिगतः स्निग्धो दर्शननाशनः ॥ १८ ॥
बिंदुर्जलस्येव चलः पद्मिनीपुटसंस्थितः ।
उष्णे संकोचमायाति छायायां परिसर्पति ॥ १९ ॥
शंखकुंदेंदुकुमुदस्फटिकोपमशुक्लिमा ।
रक्तेन तिमिरे रक्तं तमोभूतं च पश्यति ॥ २० ॥
काचेन रक्ता कृष्णा वा दृष्टिस्तादृक् च पश्यति ।
लिंगनाशेऽपि तादृग् दृङ् निःप्रभा हतदर्शना ॥ २१ ॥
संसर्गसंनिपातेषु विद्यात्संकीर्णलक्षणान् ।
तिमिरादीनकस्माच्च तैः स्याद्व्यक्ताकुलेक्षणम् ॥ २२ ॥
तिमिरे शेषयोर्दृष्टौ चित्रो रागः प्रजायते ।
द्योत्यते नकुलस्येव यस्य दृङ् निचिता मलैः ॥ २३ ॥
नकुलांधः स तत्राह्नि चित्रं पश्यति नो निशि ।
अर्केऽस्तमस्तकन्यस्तगभस्तौ स्तंभमागताः ॥ २४ ॥
स्थगयंति दृशं दोषा दोषांधः स गदोपरः ।
दिवाकरकरस्पृष्टा भ्रष्टा दृष्टिपथान्मलाः ॥ २५ ॥
विलीनलीना यच्छंति व्यक्तमत्राह्नि दर्शनम् ।

उष्णतप्तस्य सहसा शीतवारिनिमज्जनात् ॥ २६ ॥
त्रिदोषरक्तसंपृक्तो यात्यूष्मोर्ध्वं ततोऽक्षिणी ।
दाहोषे मलिनं शुक्लमहन्याविलदर्शनम् ॥ २७ ॥
रात्रावांध्यं च जायेत विदग्धोष्णेन सा स्मृता ।
भृशमम्लाशनाद्दोषैः सास्त्रैर्या दृष्टिराचिता ॥ २८ ॥
सक्लेदकंडूकलुषा विदग्धाम्लेन सा स्मृता ।
शोकज्वरशिरोरोगसंतप्तस्यानिलादयः ॥ २९ ॥
धूमाविलां धूमदर्शां दृशं कुर्युः स धूमरः ।
सहसैवाल्पसत्त्वस्य पश्यतो रूपमद्भुतम् ॥ ३० ॥
भास्वरं भास्करादिं वा वाताद्या नयनाश्रिताः ।
कुर्वंति तेजः संशोष्य दृष्टिं मुषितदर्शनाम् ॥ ३१ ॥
वैडूर्यवर्णां स्तिमितां प्रकृतिस्थामिवाव्यथाम् ।
औपसर्गिक इत्येष लिंगनाशो

ऽत्र वर्जयेत् ।

विना कफाल्लिंगनाशान् गंभीरां ह्रस्वजामपि ॥ ३२ ॥
षट् काचा नकुलांधश्च याप्याः शेषांस्तु साधयेत् ।
द्वादशेति गदा दृष्टौ निर्दिष्टाः सप्तविंशतिः" ॥ ३३ ॥

---

## त्रयोदशोऽध्यायः ।

अथाऽतस्तिमिरप्रतिषेधं व्याख्यास्यामः ।
"तिमिरं काचतां याति काचोप्यांध्यमुपेक्षया ।

नेत्ररोगेष्वतो घोरं तिमिरं साधयेद् द्रुतम् ॥ १ ॥
तुलां पचेत जीवंत्या द्रोणेऽपां पादशेषिते ।
तत्क्वाथे द्विगुणक्षीरं घृतप्रस्थं विपाचयेत् ॥ २ ॥
प्रपौंडरीककाकोलीपिप्पलीरोध्रसैंधवैः ।
शताह्वामधुकद्राक्षासितादारुफलत्रयैः ॥ ३ ॥
कार्षिकैर्निशि तत्पीतं तिमिरापहरं परम् ।
द्राक्षाचंदनमंजिष्ठाकाकोलीद्वयजीवकैः ॥ ४ ॥
सिताशतावरीमेदापुंड्राह्वमधुकोत्पलैः ।
पचेज्जीर्णं घृतप्रस्थं समक्षीरं पिचून्मितैः ॥ ५ ॥
हंति तत्काचतिमिररक्तराजीशिरोरुजः ।
पटोलनिंबकटुकादार्वीसेव्यवरावृषम् ॥ ६ ॥
सधन्वयासत्रायंतीपर्पटं पालिकं पृथक् ।
प्रस्थमामलकानां च क्राथयेन्नल्वणेंऽभसि ॥ ७ ॥
तदाढकेऽर्धपलिकैः पिष्टैः प्रस्थं घृतात्पचेत् ।
मुस्तभूनिंबयष्ट्याह्वकुटजोदीच्यचंदनैः ॥ ८ ॥
सपिप्पलीकैस्तत्सर्पिर्घ्राणकर्णास्यरोगजित् ।
विद्रधिज्वरदुष्टारुर्विसर्पापचिकुष्ठनुत् ॥ ९ ॥
विशेषाच्छुक्रतिमिरनक्तांध्योष्णाम्लदाहनुत् ।
त्रिफलाष्टपलं क्वाथ्यं पादशेषं जलाढके ॥ १० ॥
तेन तुल्यपयस्केन त्रिफलापलकल्कवान् ।
अर्धप्रस्थो घृतात्सिद्धः सितया माक्षिकेण वा ॥ ११ ॥

युक्तं पिबेत्तित्तिमिरी तद्युक्तं वा वरारसम् ।
यष्टीमधुद्विकाकोलीव्याघ्रीकृष्णामृतोत्पलैः ॥ १२ ॥
पालिकैः ससिताद्राक्षैर्घृतप्रस्थं पचेत्समैः ।
अजाक्षीरवरावासामार्कवस्वरसैः पृथक् ॥ १३ ॥
महात्रैफलमित्येतत्परं दृष्टिविकारजित् ।
त्रैफलेनाथ हविषा लिहानस्त्रिफलां निशि ॥ १४ ॥
यष्टीमधुकसंयुक्तां मधुना च परिप्लुताम् ।
मासमेकं हिताहारः पिबन्नामलकोदकम् ॥ १५ ॥
सौपर्णं लभते चक्षुरित्याह भगवान्निमिः ।
ताप्यायोहेमयष्ट्याह्वसिताजीर्णाज्यमाक्षिकैः ॥ १६ ॥
संयोजिता यथाकामं तिमिरघ्नी वरा वरा ।
सघृतं वा वराक्वाथं शीलयेत्तिमिरामयी ॥ १७ ॥
अपूपसूपसक्तून्वा त्रिफलाचूर्णसंयुतान् ।
पायसं वा वरायुक्तं शीतं समधुशर्करम् ॥ १८ ॥
प्रातर्भक्तस्य वा पूर्वमद्यात्पथ्यां पृथक् पृथक् ।
मृद्वीकां शर्कराक्षौद्रैः सततं तिमिरातुरः ॥ १९ ॥
स्रोतोजांशांश्चतुःषष्टिं ताम्रायोरूप्यकांचनैः ।
युक्तान् प्रत्येकमेकांशैरंधमूषोदरस्थितान् ॥ २० ॥
ध्मापयित्वा समावृत्तं ततस्तच्च निषेचयेत् ।
रसस्कंधकषायेषु सप्तकृत्वः पृथक् पृथक् ॥ २१ ॥
वैडूर्यमुक्ताशंखानां त्रिभिर्भागैर्युतं ततः ।

चूर्णांजनं प्रयुंजीत तत्सर्वं तिमिरापहम् ॥ २२ ॥
मांसीत्रिजातकायःकुंकुमनीलोत्पलाभयातुत्थैः ।
सितकाचशंखफेनकमरिचांजनपिप्पलीमधुकैः ॥२३॥
चंद्रेऽश्विनीसनाथे सुचूर्णितैरंजयेद्युगुलमक्ष्णोः ।
तिमिरार्मरक्तराजीकंडूकाचादिशममिच्छन् ॥ २४ ॥
मरिचवरलवणभागौ भागौ द्वौ कणसमुद्रफेनाभ्याम् ।
सौवीरभागनवकं चित्रायां चूर्णितं कफामयजित् ॥२५॥
द्राक्षामृणालीस्वरसे क्षीरमद्यवसासु च ।
पृथक् दिव्याप्सु स्रोतोजं सप्तकृत्वो निषेचयेत् ॥२६॥
तच्चूर्णितं स्थितं शंखे दृक्प्रसादनमंजनम् ।
शस्तं सर्वाक्षिरोगेषु विदेहपतिनिर्मितम् ॥ २७ ॥
निर्दग्धं बादरांगौरस्तुत्थं चेत्थं निषेचितम् ।
क्रमादजापयःसर्पिःक्षौद्रे तस्मात् पलद्वयम् ॥ २८ ॥
कार्षिकैस्ताप्यमरिचस्रोतोजकटुकानतैः ।
पटुरोध्रशिलापथ्याकणैलांजनफेनिकैः ॥ २९ ॥
युक्तं पलेन यष्ट्याश्च मूषांतध्मातचूर्णितम् ।
हंति काचार्मनक्तांध्यरक्तराजीः सुशीलितः ॥ ३० ॥
चूर्णो विशेषात्तिमिरं भास्करो भास्करो यथा ।
त्रिंशद्भागा भुजंगस्य गंधपाषाणपंचकम् ॥
शुल्बतारकयोर्द्वौ द्वौ वंगस्यैकोंजनत्रयम् ॥ ३१ ॥
अंधमूषीकृतं ध्मातं पक्कं विमलमंजनम् ।

तिमिरांतकरं लोके द्वितीय इव भास्करः ॥ ३२ ॥
गोमूत्रे छगणरसेऽम्लकांजिके च
स्त्रीस्तन्ये हविषि विषे च माक्षिके च ।
यत्तुत्थं ज्वलितमनेकशो निषिक्तं
तत्कुर्याद्गरुडसमं नरस्य चक्षुः ॥ ३३ ॥
श्रेष्ठाजलं भृंगरसं सविषाज्यमजापयः ।
यष्टीरसं च यत्सीसं सप्तकृत्वः पृथक् पृथक् ॥ ३४ ॥
तप्तं तप्तं पायितं तच्छलाका
नेत्रे युक्ता सांजनानंजना वा ।
तैमिर्यार्मस्रावपैच्छिल्यपैल्लं
कंडूं जाड्यं रक्तराजीं च हंति ॥ ३५ ॥
रसेंद्रभुजगौ तुल्यौ तयोस्तुल्यमथांजनम् ।
ईषत्कर्पूरसंयुक्तमंजनं तिमिरापहम् ॥ ३६ ॥
यो गृध्रस्तरुणरविप्रकाशगल्ल-
स्तस्यास्यं समयमृतस्य गोशकृद्भिः ।
निर्दग्धं समघृतमंजनं च पेष्यं
योगोऽयं नयनबलं करोति गार्ध्रम् ॥ ३७ ॥
कृष्णसर्पवदने सहविष्कं दग्धमंजनमनिःसृतधूमम् ।
चूर्णितं नलदपत्रविमिश्रं भिन्नतारमपि रक्षति चक्षुः ३८
कृष्णं सर्पं मृतं न्यस्य चतुरश्चापि वृश्चिकान् ।
क्षीरकुंभे त्रिसप्ताहं क्लेदयित्वाथ मंथयेत् ॥ ३९ ॥

तत्र यन्नवनीतं स्यात्पुष्णीयात्तेन कुक्कुटम् ।
अंधस्तस्य पुरीषेण प्रेक्षते ध्रुवमंजनात् ॥ ४० ॥
कृष्णसर्पवसा शंखः कतकात् फलमंजनम् ।
रसक्रियेयमचिरादंधानां दर्शनप्रदा ॥ ४१ ॥
मरिचानि दशार्धपिचु-
स्ताप्यात्तुत्थात्पलं पिचुर्यष्ट्याः ।
क्षीरार्द्रदग्धमंजन-
मप्रतिसाराख्यमुत्तमं तिमिरे ॥ ४२ ॥
अक्षबीजमरिचामलकत्वक्-
तुत्थयष्टिमधुकैर्जलपिष्टैः ।
छाययैव गुटिकाः परिशुष्का
नाशयंति तिमिराण्यचिरेण ॥ ४३ ॥
मरिचामलकजलोद्भव-
तुत्थांजनताप्यधातुभिः क्रमवृद्धैः ।
षण्माक्षिक इति योग-
स्तिमिरार्मक्लेदकाचकंडूर्हंता ॥ ४४ ॥
रत्नानि रूप्यं स्फटिकं सुवर्णं
स्रोतोंजनं ताम्रमयः सशंखम् ।
कुचंदनं लोहितगैरिकं च
चूर्णांजनं सर्वदृगामयघ्नम् ॥ ४५ ॥
तिलतैलमक्षतैलं भृंगस्वरसोऽसनाच्च निर्यूहः ।

आयसपात्रविपक्वं करोति दृष्टेर्बलं नस्यम् ॥ ४६ ॥
दोषानुरोधेन च नैकशस्तं
स्नेहास्रविस्रावणरेकनस्यैः ।
उपाचरेदंजनमूर्धबस्ति-
बस्तिक्रियातर्पणलेपसेकैः ॥ ४७ ॥
सामान्यं साधनमिदं प्रतिदोषमतः शृणु ।
वातजे तिमिरे तत्र दशमूलांभसा घृतम् ॥ ४८ ॥
क्षीरे चतुर्गुणे श्रेष्ठाकल्कपक्वं पिबेत्ततः ।
त्रिफलापंचमूलानां कषायं क्षीरसंयुतम् ॥ ४९ ॥
एरंडतैलसंयुक्तं योजयेच्च विरेचनम् ।
समूलजालजीवंतीतुलां द्रोणेऽभसः पचेत् ॥ ५० ॥
अष्टभागस्थिते तस्मिंस्तैलप्रस्थं पयःसमम् ।
बलात्रितयजीवंतीवरीमूलैः पलोन्मितैः ॥ ५१ ॥
यष्टीपलैश्चतुर्भिश्च लोहपात्रे विपाचयेत् ।
लोह एव स्थितं मासं नावनादूर्ध्वजत्रुजान् ॥ ५२ ॥
वातपित्तामयान् हंति तद्विशेषाद् दृगाश्रयान् ।
केशास्यकंधरास्कंधपुष्टिलावण्यकांतिदम् ॥ ५३ ॥
सितैरंडजटासिंहीफलदारुवचानतैः ।
घोषया बिल्वमूलैश्च तैलं पक्वं पयोन्वितम् ॥ ५४ ॥
नस्यं सर्वोर्ध्वजत्रूत्थवातश्लेष्मामयार्तिजित् ।
वसांजये च वैयाघ्री वाराही वा प्रशस्यते ॥ ५५ ॥

गृध्राहिकुक्कुटोत्था वा मधुकेनान्विता पृथक् ।
प्रत्यंजने च स्रोतोजं रसक्षीरघृते क्रमात् ॥ ५६ ॥
निषिक्तं पूर्ववद्योज्यं तिमिरघ्नमनुत्तमम् ।
न चेदेवं शमं याति ततस्तर्पणमाचरेत् ॥ ५७ ॥
शताह्वाकुष्टनलदकाकोलीद्वययष्टिभिः ।
प्रपौंडरीकसरलपिप्पलीदेवदारुभिः ॥ ५८ ॥
सर्पिरष्टगुणक्षीरं पक्कं तर्पणमुत्तमम् ।
मेदसस्तद्वदैणेयाद्दुग्धसिद्धात् खजाहतात् ॥ ५९ ॥
उद्धृतं साधितं तेजो मधुकोशीरचंदनैः ।
श्वाविच्छल्यकगोधानां दक्षतित्तिरिबर्हिणाम् ॥ ६० ॥
पृथक्पृथगनेनैव विधिना कल्पयेद्वसाम् ।
प्रसादनं स्नेहनं च पुटपाकं प्रयोजयेत् ॥ ६१ ॥
वातपीनसवच्चात्र निरूहं सानुवासनम् ।
पित्तजे तिमिरे सर्पिर्जीवनीयफलत्रयैः ॥ ६२ ॥
विपाचितं पाययित्वा स्निग्धस्य व्यधयेत्सिराम् ।
शर्करैलात्रिवृच्चूर्णैर्मधुयुक्तैर्विरेचयेत् ॥ ६३ ॥
सुशीतान् सेकलेपादीन् युंज्यान्नेत्रास्यमूर्धसु ।
सारिवापद्मकोशीरमुक्ताशाबरचंदनैः ॥ ६४ ॥
वर्तिः शस्तांजने चूर्णस्तथा पत्रोत्पलांजनैः ।
सनागपुष्पकर्पूरयष्ट्याह्वस्वर्णगैरिकैः ॥ ६५ ॥

सौवीरांजनतुत्थकशृंगीधात्रीफलस्फटिककर्पूरम् ।
पंचांशं पंचांशं त्र्यंशमथैकांशमंजनं तिमिरघ्नम् ॥६६॥
नस्यं चाज्यं शृतं क्षीरजीवनीयसितोत्पलैः ।
श्लेष्मोद्भवेऽमृताक्काथवराकणशृतं घृतम् ॥ ६७ ॥
विध्येत्सिरां पीतवतो दद्याच्चानुविरेचनम् ।
क्काथं पूगाभयाशुंठीकृष्णाकुंभनिकुंभजम् ॥ ६८ ॥
ह्रीबेरदारुद्विनिशाकृष्णाकल्कैः पयोन्वितैः ।
द्विपंचमूलनिर्यूहे तैलं पक्कं च नावनम् ॥ ६९ ॥
शंखप्रियंगुनेपालीकटुत्रिकफलत्रिकैः ।
दृग्वैमल्याय विमला वर्तिः स्यात्कोकिला पुनः ॥७०॥
कृष्णलोहरजोव्योषसैंधवत्रिफलांजनैः ।
शशगोखरसिंहोष्ट्रद्विजा लालाटमस्थि च ॥ ७१ ॥
श्वेतगोवालमरिचशंखचंदनफेनकम् ।
पिष्टं स्तन्याजदुग्धाभ्यां वर्तिस्तिमिरशुक्रजित् ॥
रक्तजे पित्तवत्सिद्धिः शीतैश्चास्रं प्रसादयेत् ॥ ७२ ॥

द्राक्षया नलदरोध्रयष्टिभिः
शंखताम्रहिमपद्मपद्मकैः ।
सोत्पलैश्छगलदुग्धवर्तितै-
रस्रजं तिमिरमाशु नश्यति ॥ ७३ ॥

संसर्गसंनिपातोत्थे यथादोषोदयं क्रिया ।
सिद्धं मधूककृमिजिन्मरिचामरदारुभिः ॥ ७४ ॥

सक्षीरं नावनं तैलं पिष्टैर्लेपो मुखस्य च ।
नतनीलोत्पलानंतायष्ट्याह्वसुनिषण्णकैः ॥ ७५ ॥
साधितं नावने तैलं शिरोबस्तौ च शस्यते ।
दद्यादुशीरनिर्यूहे चूर्णितं कणसैंधवम् ॥ ७६ ॥
तच्छ्रुतं सघृतं भूयः पचेत्क्षौद्रं घने क्षिपेत् ।
शीते चास्मिन् हितमिदं सर्वजे तिमिरेंऽजनम् ॥७७॥
अस्थीनि मज्जपूर्णानि सत्त्वानां रात्रिचारिणाम् ।
स्रोतोजांजनयुक्तानि वहत्यंभसि वासयेत् ॥ ७८ ॥
मासं विंशतिरात्रं वा ततश्चोद्धृत्य शोषयेत् ।
समेषश्रृंगीपुष्पाणि सयष्ट्याह्वानि तानि तु ॥ ७९ ॥
चूर्णितान्यंजनं श्रेष्ठं तिमिरे सांनिपातिके ।
काचेऽप्येषा क्रिया मुक्त्वा सिरां यंत्रनिपीडिताः॥८०॥
आंध्याय स्युर्मला दद्यात्स्राव्ये रक्ते जलौकसः ।
गुडः फेनोंजनं कृष्णा मरिचं कुंकुमाद्रजः ॥ ८१ ॥
रसक्रियेयं सक्षौद्रा काचयापनमंजनम् ।
नकुलांधे त्रिदोषोत्थे तैमिर्यविहितो विधिः ॥ ८२ ॥
रसक्रिया घृतक्षौद्रगोमयस्वरसद्रुतैः ।
तार्क्ष्यगैरिकतालीसैर्निशांध्ये हितमंजनम् ॥ ८३ ॥
दध्ना विघृष्टं मरिचं रात्र्यांध्येंजनमुत्तमम् ।
करंजिकोत्पलस्वर्णगैरिकांभोजकेसरैः ॥ ८४ ॥
पिष्टैर्गोमयतोयेन वर्तिर्दोषांध्यनाशिनी ।

अजामूत्रेण वा कौंतीकृष्णास्रोतोजसैंधवैः ॥ ८५ ॥
कालानुसारीत्रिकटुत्रिफलालमनःशिलाः ।
सफेनाश्छागदुग्धेन राध्यंधे वर्तयो हिताः ॥ ८६ ॥
संनिवेश्य यकृन्मध्ये पिप्पलीरदहन्पचेत् ।
ताः शुष्का मधुना घृष्टा निशांध्ये श्रेष्ठमंजनम् ॥ ८७ ॥
खादेच्च प्लीहयकृती माहिषे तैलसर्पिषा ।
घृते सिद्धानि जीवंत्याः पल्लवानि च भक्षयेत् ॥ ८८ ॥
तथातिमुक्तकैरंडशेफाल्यभिरुजानि च ।
भृष्टं घृतं कुंभयोनेः पत्रैः पाने च पूजितम् ॥ ८९ ॥
धूमराख्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा ।
स्निग्धं विरेचयेच्छीतैः शीतैर्दिह्याच्च सर्वतः ॥ ९० ॥
गोशकृद्रसदुग्धाज्यैर्विपक्वं शस्यतेऽजनम् ।
स्वर्णगैरिकतालीसचूर्णावापा रसक्रिया ॥ ९१ ॥
मेदाशाबरकानंतामंजिष्ठादार्वियष्टिभिः ।
क्षीराष्टांशं घृतं पक्वं सतैलं नावनं हितम् ॥ ९२ ॥
तर्पणं क्षीरसर्पिः स्यादशाम्यति सिराव्यधः ।
चिंताभिघातभीशोकरौक्ष्यात्सोत्कटकासनात् ॥ ९३ ॥
विरेकनस्यवमनपुटपाकादिविभ्रमात् ।
विदग्धाहारवमनात्क्षुत्तृष्णादिविधारणात् ॥ ९४ ॥
अक्षिरोगावसानाच्च पश्येत्तिमिररोगिवत् ।
यथास्वं तत्र युंजीत दोषादीन् वीक्ष्य भेषजम् ॥ ९५ ॥

सूर्योपरागानलविद्युदादि-
विलोकनेनोपहतेक्षणस्य ।
संतर्पणं स्निग्धहिमादि कार्यं
तथांजनं हेमघृतेन घृष्टम् ॥ ९६ ॥
चक्षूरक्षायां सर्वकालं मनुष्यै-
र्यत्नः कर्तव्यो जीविते यावदिच्छा ।
व्यर्थो लोकोऽयं तुल्यरात्रिंदिवानां
पुंसामंधानां विद्यमानेऽपि वित्ते ॥ ९७ ॥
त्रिफला रुधिरस्रुतिर्विशुद्धि-
र्मनसो निर्वृतिरंजनं च नस्यम् ।
शकुनासनता सपादपूजा
घृतपानं च सदैव नेत्ररक्षा ॥ ९८ ॥
अहितादशनात्सदा निवृत्ति-
र्भृशभास्वच्चलसूक्ष्मवीक्षणाच्च ।
मुनिना निमिनोपदिष्टमेतत्
परमं रक्षणमीक्षणस्य पुंसाम् ॥ ९९ ॥

---

## चतुर्दशोऽध्यायः ।

अथातो लिंगनाशप्रतिषेधं व्याख्यास्यामः ।
"विध्येत्सुजातं निःप्रेक्षं लिंगनाशं कफोद्भवम् ।
आवर्तक्यादिभिः षड्भिर्विवर्जितमुपद्रवैः ॥ १ ॥

सोऽसंजातो हि विषमो दधिमस्तुनिभस्तनुः ।
शलाकयाऽवकृष्टोऽपि पुनरूर्ध्वं प्रपद्यते ॥ २ ॥
करोति वेदनां तीव्रां दृष्टिं च स्थगयेत्पुनः ।
श्लेष्मलैः पूर्यते चाशु सोऽन्यैः सोपद्रवैश्चिरात् ॥ ३ ॥
श्लैष्मिको लिंगनाशो हि सितत्वाच्छ्लेष्मणः सितः ।
तस्यान्यदोषाभिभवाद्भवत्यानीलता गदः ॥ ४ ॥
तत्रावर्तचला दृष्टिरावर्तक्यरुणा सिता ।
शर्करार्कपयोलेशनिचितेव घनाति च ॥ ५ ॥
राजीमती दृङ्निचिता शालिशूकाभराजिभिः ।
विषमच्छिन्नदग्धाभा सरुक्छिन्नांशुका स्मृता ॥ ६ ॥
दृष्टिः कांस्यसमच्छाया चंद्रकी चंद्रकाकृतिः ।
छत्राभा नैकवर्णा च छत्रकी नाम नीलिका ॥ ७ ॥
न विध्येदसिरार्हाणां न दृक्पीनसकासिनाम् ।
नाजीर्णिभीरुवमितशिरःकर्णाक्षिशूलिनाम् ॥ ८ ॥
अथ साधारणे काले शुद्धसंभोजितात्मनः ।
देशे प्रकाशे पूर्वाह्णे भिषग् जानूच्चपीठगः ॥ ९ ॥
यंत्रितस्योपविष्टस्य स्विन्नाक्षस्य मुखानिलैः ।
अंगुष्ठमृदिते नेत्रे दृष्टौ दृष्ट्वोत्प्लुतं मलम् ॥ १० ॥
स्वनासां प्रेक्षमाणस्य निष्कंपं मूर्ध्नि धारिते ।
कृष्णादर्धांगुलं मुक्त्वा तदर्धार्धमपांगतः ॥ ११ ॥
तर्जनीमध्यमांगुष्ठैः शलाकां निश्चलं धृताम् ।

दैवच्छिद्रं नयेत्पार्श्वादूर्ध्वमामंथयन्निव ॥ १२ ॥
सव्यं दक्षिणहस्तेन नेत्रं सव्येन चेतरत् ।
विध्येत्
सुविद्धे शब्दः स्यादरुक्चांबुलवस्रुतिः ॥ १३ ॥
सांत्वयन्नातुरं चानु नेत्रं स्तन्येन सेचयेत् ।
शलाकायास्ततोऽग्रेण निर्लिखेन्नेत्रमंडलम् ॥ १४ ॥
अबाधमानः शनकैर्नासां प्रतिनुदंस्ततः ।
उत्सिंघनाच्चापहरेद्दृष्टिमंडलगं कफम् ॥ १५ ॥
स्थिरे दोषे चले वापि स्वेदयेदक्षि बाह्यतः ।
अथ दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ॥ १६ ॥
घृताप्लुतं पिचुं दत्त्वा बद्धाक्षं शाययेत्ततः ।
विद्धादन्येन पार्श्वेन तमुत्तानं द्वयोर्व्यधे ॥ १७ ॥
निवाते शयनेऽभ्यक्तशिरःपादं हिते रतम् ।
क्षवथुं कासमुद्गारं ष्ठीवनं पानमंभसः ॥ १८ ॥
अधोमुखस्थितिं स्नानं दंतधावनभक्षणम् ।
सप्ताहं नाचरेत्स्नेहपीतवच्चात्र यंत्रणा ॥ १९ ॥
शक्तितो लंघयेत्सेको रुजि कोष्णेन सर्पिषा ।
सव्योषामलकं वाट्यमश्नीयात्सघृतं द्रवम् ॥ २० ॥
विलेपीं वा त्र्यहाच्चास्य क्वाथैर्मुक्त्वाक्षि सेचयेत् ।
वातघ्नैः सप्तमे त्वह्नि सर्वथैवाक्षि मोचयेत् ॥ २१ ॥
यंत्रणामनुरुध्येत दृष्टेरास्थैर्यलाभतः ।

रूपाणि सूक्ष्मदीप्तानि सहसा नावलोकयेत् ॥ २२ ॥
शोफरागरुजादीनामधिमंथस्य चोद्भवः ।
अहितैर्वैधदोषाच्च यथास्वं तानुपाचरेत् ॥ २३ ॥
कल्किताः सघृता दूर्वायवगैरिकसारिवाः ।
मुखालेपे प्रयोक्तव्या रुजारागोपशांतये ॥ २४ ॥
ससर्षपास्तिलास्तद्वन्मातुलुंगरसाप्लुताः ।
पयस्यासारिवानंतामंजिष्ठामधुयष्टिभिः ॥ २५ ॥
अजाक्षीरयुतैर्लेपः सुखोष्णः शर्मकृत्परम् ।
रोध्रसैंधवमृद्वीकामधुकैश्छागलं पयः ॥ २६ ॥
शृतमाश्चोतनं योज्यं रुजारागविनाशनम् ।
मधुकोत्पलकुष्ठैर्वा द्राक्षालाक्षासितान्वितैः ॥२७ ॥
वातघ्नसिद्धे पयसि शृतं सर्पिश्चतुर्गुणे ।
पद्मकादिप्रतीवापं सर्वकर्मसु शस्यते ॥ २८ ॥
सिरां तथानुपशमे स्निग्धस्विन्नस्य मोक्षयेत् ।
मंथोक्तां च क्रियां कुर्याद्व्यधे रूढेऽजनं मृदु ॥ २९ ॥
आढकीमूलमरिचहरितालरसांजनैः ।
विद्धेऽक्षिण सगुडा वर्तिर्योज्या दिव्यांबुपेषिता ॥३०॥

जातीशिरीषधवमेषविषाणपुष्प-
वैडूर्यमौक्तिकफलं पयसा सुपिष्टम् ।
आजेन ताम्रमसुनाः प्रतनु प्रदिग्धं
सप्ताहतः पुनरिदं पयसैव पिष्टम् ॥ ३१ ॥

पिंडांजनं हितमनातपशुष्कमक्षिण
विद्धे प्रसादजननं बलकृच्च दृष्टेः ।
स्रोतोजविद्रुमशिलांबुधिफेनतीक्ष्णै-
रस्यैव तुल्यमुदितं गुणकल्पनाभिः ॥ ३२ ॥"

---

## पंचदशोऽध्यायः ।

अथाऽतः सर्वाक्षिरोगविज्ञानं व्याख्यास्यामः ॥
" वातेन नेत्रेऽभिष्यंदे नासानाहोऽल्पशोफता ।
शंखाक्षिभ्रूललाटस्य तोदस्फुरणभेदनम् ॥ १ ॥
शुष्काल्पा दूषिका शीतमच्छमश्रु चला रुजः ।
निमेषोन्मेषणं कृच्छ्राज्जंतूनामिव सर्पणम् ॥ २ ॥
अक्ष्याध्मातमिवाभाति सूक्ष्मैः शल्यैरिवाचितम् ।
स्निग्धोष्णैश्चोपशमनं
सोऽभिष्यंद उपेक्षितः ॥ ३ ॥
अधिमंथो भवेत्तत्र कर्णयोर्नदनं भ्रमः ।
अरण्येव च मथ्यंते ललाटाक्षिभ्रुवादयः ॥ ४ ॥
हताधिमंथः सोऽपि स्यात् प्रमादात्तेन वेदनाः ।
अनेकरूपा जायंते व्रणो दृष्टौ च दृष्टिहा ॥ ५ ॥
मन्याक्षिशंखतो वायुरन्यतो वा प्रवर्तयेत् ।
व्यथां तीव्रामपैच्छिल्यरागशोफं विलोचनम् ॥ ६ ॥
संकोचयति पर्यश्रु सोऽन्यतोवातसंज्ञितः ।

तद्वन्नेत्रं भवेज्जिह्ममूनं वातविपर्यये ॥ ७ ॥
दाहो धूमायनं शोफः श्यावता वर्त्मनो बहिः ।
अंतःक्लेदोऽश्रु पीतोष्णं रागः पीताभदर्शनम् ॥ ८ ॥
क्षारोक्षितक्षताक्षित्वं पित्ताभिष्यंदलक्षणम् ।
ज्वलदंगारकीर्णाभं यकृत्पिंडसमप्रभम् ॥ ९ ॥
अधिमंथे भवेन्नेत्रं

स्यंदे तु कफसंभवे ।
जाड्यं शोफो महान् कंडूर्निद्रान्नानभिनंदनम् ॥१०॥
सांद्रस्निग्धबहुश्वेतपिच्छावद्दूषिकाश्रुता ।
अधिमंथे नतं कृष्णमुन्नतं शुक्लमंडलम् ॥ ११ ॥
प्रसेको नासिकाध्मानं पांसुपूर्णमिवेक्षणम् ।
रक्ताश्रुराजीदूषीकशुक्लमंडलदर्शनम् ॥ ॥ १२ ॥
रक्तस्यंदेन नयनं सपित्तस्यंदलक्षणम् ।
मंथेऽक्षि ताम्रपर्यंतमुत्पाटनसमानरुक् ॥ १३ ॥
रागेण बंधूकनिभं ताम्यति स्पर्शनाक्षमम् ।
असृङ्निमग्नारिष्टाभं कृष्णमग्न्याभदर्शनम् ॥ १४ ॥
अधिमंथा यथास्वं च सर्वे स्यंदाधिकव्यथाः ।
शंखदंतकपोलेषु कपाले चातिरुक्कराः ॥ १५ ॥
वातपित्तोत्तरं घर्षतोदभेदोपदेहवत् ।
रूक्षदारुणवर्त्माक्षिकृच्छ्रोन्मीलनमीलनम् ॥ १६ ॥
विकूणनं विशुष्कत्वं शीतेच्छा शूलपाकवत् ।

उक्तः शुष्काक्षिपाकोऽयं

सशोफः स्यात्रिभिर्मलैः ॥१७॥

सरक्तैस्तत्र शोफोऽतिरुग्दाहष्ठीवनादिमान् ।
पक्कोदुंबरसंकाशं जायते शुक्लमंडलम् ॥ १८ ॥
अश्रूष्णशीतविशदपिच्छलाच्छघनं मुहुः ।
अल्पशोफेऽल्पशोफस्तु पाकोऽन्यैर्लक्षणैस्तथा ॥ १९ ॥
अक्षिपाकात्यये शोफः संरंभः कलुषाश्रुता ।
कफोपदिग्धमसितं सितं प्रक्लेदरागवत् ॥ २० ॥
दाहो दर्शनसंरोधो वेदनाश्चानवस्थिताः ।
अन्नसारोऽम्लतां नीतः पित्तरक्तोल्बणैर्मलैः ॥ २१ ॥
सिराभिर्नेत्रमारूढः करोति श्यावलोहितम् ।
सशोफदाहपाकाश्रु भृशं चाविलदर्शनम् ॥ २२ ॥
अम्लोषितोऽयम्

इत्युक्ता गदाः षोडश सर्वगाः ।

हताधिमंथमेतेषु साक्षिपाकात्ययं त्यजेत् ॥ २३ ॥

वातोद्भूतः पंचरात्रेण दृष्टिं
सप्ताहेन श्लेष्मजातोऽधिमंथः ।
रक्तोत्पन्नो हंति तद्वत्त्रिरात्रान्
मिथ्याचारात् पैत्तिकः सद्य एव ॥ २४ ॥

---

